**Rajiv file -**

**Title : - Muhurtha Chintamani (Pramithakshara Tika)- Puran Dipa -Aarati Shloka & Kahani (Hindi)- Missing Pages**

**Pdf page 1 - 2 : Content, Cover page**

**Pdf pages 3 - 134 : Muhurtha Chintamani of Daivajna Rama with Tika Pramitakshara – Devanagari Manuscript**

शालिन्याह-दुष्टे योग इति॥राजा दुष्टे व्यतीपातादियोगे तथा नाड्यां घटिकायां दुर्मुहूर्तादिदुष्टायां सुवर्णं यथाशक्ति दद्यात्।एवं सर्वत्र।शेषं स्पष्टम्॥ १८॥

सूर्यारसौम्यास्फुजितोक्षनागसप्ताद्रिघस्रान् विधुरग्निनाडीः ॥ तमोयमेज्याग्निरसाश्विमासान् गंतव्यराशेः फलदाः पुरस्तात् ॥१७॥
दुष्टे योगे हेम चंद्रे च शंखं धान्यं तिथ्यर्धे तिथौ तंडुलांश्च ॥ वारे रत्नं भे च गां हेम नाड्यां दद्यात्सिंधूत्थं च तारासु राजा॥१८॥
राश्यादिगौ रविकुजौ फलदौ सितेज्यौ मध्ये सदा शशिसुतश्चरमेऽब्जमंदौ ॥ अध्वान्नवह्निभयसन्मतिवस्त्रसौख्यदुःखानि मासि जनिभे रविवासरादौ ॥ १९ ॥ इति मुहूर्तचिंतामणौ चतुर्थं गोचरप्रकरणं समाप्तम् ॥ ४ ॥

अथ वसंततिलकयान्यदाह–राश्यादीति॥पूर्वार्धं स्पष्टम्।अध्वान्नेति । यस्मिन्मासे स्वजन्मनक्षत्रप्रवेशे सूर्यादिवाराश्चेत्स्युस्तस्मिन्मासेऽध्वादीनि फलानि वाच्यानि।यत्र मासि रविवारे जन्मनक्षत्रे सति अध्वा मार्गो भवति एवं चंद्रवारे अन्नं भक्ष्यप्राप्तिरित्यादि ॥ १९ ॥इति श्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायां स्वकृतमुहूर्तचिंतामणिटीकायां प्रमिताक्षरायां चतुर्थं गोचरप्रकरणं समाप्तम् ॥ ४ ॥ अथ संस्कारप्रकरणं प्रारभ्यते ॥ अथ संस्कारप्रकरणं व्याख्यायते ॥ तत्र

Ref: https://archive.org/details/dli.ministry.26366/1199.ignca-r201-rb_part%25201/page/n129/mode/2up

**Pdf pages 135 - 172 : Puran Dipa (Handwritten script in Sanskrit , English)**

**Pdf pages 173 - 189 : Printed Book (Missing Pages) includes, Aarati Shloka (Hindi) (Sri Satyanarayana, Jaya Jagadeesha Hare, Lakshmi ji, Brihaspati Dev)- Brihaspati Dev Kahani (Hindi)**

॥ श्री सत्यनारायण जी की आरती ॥
जय श्री लक्ष्मी रमणा जय श्री लक्ष्मी रमणा, सत्यनारायण स्वामी जन पातक हरणा ॥टेक०॥

सामान भी आ जावेगा। बृहस्पतिदेव की कहानी निम्न प्रकार है।
* बृहस्पतिदेव की कहानी *
प्राचीनकाल में एक ब्राह्मण था। वह बहुत निर्धन था, उसके कोई भी संतान नहीं थी। उसकी स्त्री बहुत मलीनता के साथ रहती थी। वह स्नान न करती, किसी देवता का पूजन न करती और प्रातः

अथताराकूटमनुष्टुभाह कन्यर्क्षादिति कन्यानक्षत्राद्वरनक्षत्रं यावद्गणयेत् तथा वरनक्षत्रादपि कन्यानक्षत्रं गणयेत्ततो वशिष्टके नवभिर्भक्ते यद
वशिष्टं तच्चेत्त्रिपंचसप्तमितं भवेत्तदाऽसदशुभं स्मृतं अन्यथाऽएकद्विचतुःषडष्टनवमितं चेत्तदा शुभं उभयत्रापि त्रिपंचादिमिते शेषे तारामैत्री नास्त्येव
गुणाभावः एकत्र चेत्तदाऽर्धमैत्री तदा सार्धैकोगुणः उभयत्रापि चेच्छुभादिशेषाभावस्तदा पूर्णमैत्री गुणत्रयं २४ अथयोनिकूटं शार्दूलविक्रीडि
तद्वयेनाह अश्विन्यंबुपयोरिति ज्येष्ठामैत्रभयोरिति अश्विनीशततारकयोर्हयोऽश्वोयोनिरुक्तः एवं स्वातीहस्तयोः कासरोमहिषः लुलायोमहिषोवाह
द्विषट्कासरसैरिभाइत्यमरोक्तेः कर्णःश्रवणः अंबुपूर्वाषाढा तयोर्वानरोमर्कटः चांद्रंमृगः अजयोनिर्ब्रह्मा तद्रोहिणी तयोरहिः सर्पः कुरंगोहरिणः

कन्यर्क्षाद्वरभं यावत्कन्याभं वरभादपि गणयेन्नवहृच्छेषे त्र्यद्रिभमसत्स्मृतं २४ अश्विन्यंबुपयोर्हयो निगदितः स्वात्य
र्कयोः कासरः सिंहो वस्वजपाद्भयोः समुदितो याम्यांत्ययोः कुंजरः मेषो देवपुरोहितानलभयोः कर्णाम्बुनोर्वानरः स्याद्वैश्वाभि
जितोस्तथैव नकुलश्चान्द्राब्जयोन्योरहिः २५ ज्येष्ठामैत्रभयोः कुरंग उदितो मूलार्द्रयोः श्वा तथा मार्जारोदितिसार्पयोरथमघा
योन्योस्तथैवोंदुरुः व्याघ्रो द्वीशभचित्रयोरपि च गौरर्यमणबुध्न्यर्क्षयोर्योनिः पादगयोः परस्परमहावैरं भयोन्योस्त्यजेत् २६

अनुराधाज्येष्ठयोः द्वीशभं विशाखा चित्रयोर्व्याघ्रः बुध्न्यर्क्षं उत्तराभाद्रपदा अर्यमोत्तराफाल्गुनी तयोर्गौर्योनिः अन्यत्स्पष्टं फलमाह पादगयोरिति
एकस्मिन्पादे चरणे गतयोरुक्तनक्षत्रयोन्योः परस्परमहावैरं भवेत् यथा अश्विन्यंबुपयोर्हयो निगदितः स्वात्यर्कयोः कासर इति पादः तत्रोक्तयोर्भयो
न्योरश्वमहिषयोर्महावैरं एवं सिंहहस्तिनोरित्यादि एतत्फलमाह अत्रिः एकयोनिषु संपत्त्यै दंपत्योः संगमः सदा भिन्नयोनिषु मध्यः स्याद्वैरिभावेन चेत्तयोः
योनेरघातेनोद्वाहः सतुकार्योवियोगदुःशाविवर्ध्यंचयघस्तिकारयेवतुदोषभाक् अत्रातिवैरं वैरं उदासीनं मैत्रं अतिमैत्रं क्रमेण गुणविभागः गोव्याघ्रादीनां अतिवै
रं तत्र गुणाभावः शुनकमार्जारादीनां वैरं तत्रैकोगुणः अश्वमेषादीनामौदास्यं तत्र गुणद्वयं गोमेषादीनां मैत्रं तत्र गुणत्रयं एकयोनौ अतिमैत्रं तत्र गुणचतुष्टयं २६

अथग्रहमैत्रीं शार्दूलविक्रीडितेनाभ्यामाह मित्राणीति मित्रेचेति द्युमणेः सूर्यस्यभौमगुरुचंद्राः मित्राणि शुक्रशनीअस्यवैरिणौ अस्यसौम्यः बुधःसमः वि
धोः चंद्रस्यबुधरवीमित्रे पुनरस्यविधोर्द्विषन्शत्रुर्नास्ति मंगलगुरुशुक्रशनयस्तुसमाएव अथभौमस्य गुरुचंद्रसूर्यामित्राणि बुधःशत्रुः शुक्रशनीस
मौ अथशशभृत्सूनोः बुधस्यसितोहस्करौशुक्ररवीमित्रे अस्यबुधस्यशशीशत्रुः गुरुशनीभौमाःसमाः अथगीष्पतेर्गुरोः सूर्यभौमचंद्रामित्राणि बुधशु
क्रौशत्रू सूर्यजःशनिःसमः अथकवेःशुक्रस्यबुधशनीमित्रे चंद्रसूर्यौशत्रू कुजगुरूसमौ अथशनेःशुक्रबुधौमित्रे रविचंद्रभौमाद्विषोवैरिणः अन्यो
गुरुःसमः अत्रगुणविचारः तत्रैकाधिपतित्वेपरस्परमित्रत्वेपंचगुणाः सममित्रत्वेचत्वारः उभयसमत्वेत्रयोगुणाः मित्रवैरेगुणद्वयंसमवैरेएकगुणः

मित्राणि द्युमणेः कुजेज्यशशिनः शुक्रार्कजौवैरिणौसौम्यश्चास्यसमोविधोर्बुधरवी [illegible] मित्रेनचास्यद्विषत् शेषाश्चास्यसमाः
कुजस्यसुहृदश्चंद्रेज्यसूर्याबुधः शत्रुःशुक्रशनीसमौचशशभृत्सूनोः सितोहस्करौ [illegible] मित्रेचास्यरिपुःशशीगुरुशनि
स्माजाः समागीष्पतेर्मित्राण्यर्ककुजेंद्रवोबुधसितौशत्रूसमः सूर्यजः मित्रेसौम्यशनीकवेःशशिरवीशत्रूकुजेज्यौसमौमि
त्रेशुक्रबुधौशनेःशशिरविक्ष्माजाद्विषोऽन्यःसमः २८ रक्षोनरामरगणाः क्रमतोमघाहिवस्विंद्रमूलवरुणानिलतक्षराधाः
पूर्वोत्तरात्रयविधातृयमेशभानिमैत्रादितीदुहरिपौष्णमरुल्लघूनि २९ निजनिजगणमध्येप्रीतिरत्युत्तमास्यादमर
मनुजयोःसामध्यमासम्प्रदिष्टा॥ ३० परस्परवैरेगुणाभावः २७ २८ अथगणकूटंवसंततिलकयाशालिन्याचाह रक्षोनरेति निजनिजेति क्रमतो

रक्षोनरामरगणाः पादत्रयेणोच्यंते तक्षचित्रा राधाविशाखा मघादिएतत्पर्यंतंनक्षत्राणिरक्षोगणः पूर्वात्रयमुत्तरात्रयंविधातारोहिणीयमाभ[illegible]
आर्द्रा एतानिभानिनरगणोमनुष्यगणः मैत्रमनुराधा अदितिःपुनर्वसुः इंदुर्मृगः हरिःश्रवणःपौ[illegible]वती मरुत्स्वाती लघूनिअश्विनीपुष्यहस्ताः एतानि
नवभान्यमरगणोदेवगणइति २९ निजेति स्वस्वगणेविद्यमानयोःस्त्रीपुरुषनक्षत्रगणयोरत्युत्तमा[illegible]प्रीतिःस्यात् अमरमनुजयोर्देवमनुष्ययोःस्त्रीपुरुषयोः

परस्परं प्रीतिर्मध्यमा स्यात् असुरमनुजयो राक्षसमनुष्ययोः स्त्रीपुरुषयोर्मृत्युरेव प्रदिष्टः प्रबलदुर्बलन्यायेन मनुष्यगणस्यैव नाशः शार्ङ्गीये रक्षोगणः
पुमान् चेत्स्यात्कन्या भवति मानवी केपीच्छंति तदोद्वाहं व्यस्तं कोपीह नेच्छति एतत्तुल्यन्यायादेव देवराक्षसयोरपि द्रष्टव्यं अस्यापवादमाह गर्गः रक्षोगणो
यदा पुंसां कुमारी नृगणा भवेत् सद्भकूटं खगप्रीतिर्योनिशुद्धं शुभं तदेति अत्रैयं गुणकल्पना नरराक्षसयोर्महद्वैरं तत्र गुणाभावः देवराक्षसयोर्वैरं तत्र गु
णाभावः देवमनुष्यत्वे चत्वारः गणैकत्वे षड्गुणाः ३० अथ राशिकूटमनुष्टुभाह मृत्युरिति स्त्रीपुरुषयोः परस्परं षष्ठाष्टमराशित्वे सति मृत्युर्ज्ञेयः एवं
नवात्मजनवपंचमेऽपत्यानां हानिः एवं द्विर्द्वादशे निर्धनत्वं दारिद्र्यं स्यात् अन्यत्र तृतीयैकादशे चतुर्थदशमे समसप्तमे वा सति सौख्यकृत्पाणिपीडनं
स्यात् ३१ अथास्य दुष्टभकूटस्य परिहारं शार्दूलविक्रीडितेनाह प्रोक्ते इति स्त्रीपुरुषराश्योर्द्वयोरेकाधिपत्ये सति एकस्वामिकत्वे सति प्रोक्ते दुष्टकूटे

**असुरमनुजयोश्चेन्मृत्युरेव प्रदिष्टो दनुजविबुधयोः स्याद्वैरमेकांततोऽत्र ३० मृत्युः षडष्टके ज्ञेयोऽपत्यहानिर्नवात्मजे द्वि**
**र्द्वादशे निर्धनत्वं द्वयोरन्यत्र सौख्यकृत् ३१ प्रोक्ते दुष्टभकूटके परिणयस्त्वेकाधिपत्ये शुभो योराश्योरीश्वरसौहृदेऽपि गदितो**
**नाड्यृक्षस्शुद्धिर्यदि ।**

॥ षडष्टकादावपि विवाहः शुभो गदितः यथा मेषवृश्चिकयोः तुलावृषभयोर्वा नवपंचमत्वेकाधिपत्याभावः द्वि
र्द्वादशे मकरकुंभयोः अथवा राशीश्वरयो राशिस्वामिनोः सौहृदे मैत्रेऽपि यदि नाडीनक्षत्रयोः शुद्धिर्वेधो न भवेत्तदापि दुष्टभकूटके विवाहः शुभः यथा
षट्काष्टके मीनसिंहराश्योः नवपंचमे मेषधनुषोः द्विर्द्वादशे मीनमेषयोरित्यादि तथा च वसिष्ठः द्विर्द्वादशे वा नवपंचमे वा षडष्टके राक्षसयोषिता
वा एकाधिपत्ये भवने प्रमैत्रे शुभाय पाणिग्रहणं विधेयमित्यादि अन्यच्च विषमात्कन्यकाराशेः षष्ठं षष्ठाष्टकं न सत् समात्षष्ठं शुभं ज्ञेयं विपरीतं न
शोभनं अन्यर्क्षेशपयोरिति अन्यर्क्षे प्रीतिषड्भाष्टकादिभ्योऽन्यराशौ राशिस्वामिनोः परस्परं शत्रुत्वे वा सति अंशपयोर्नवांशराशिनवांशस्वामिनोर्बलित्वस
खित्वे स्यातां बलित्वं च सखित्वं च प्रथमा द्विवचनांतं पदं बलित्वे उच्चादिस्थानस्थितत्वेन प्रबलत्वं सखिता परस्परं मैत्री ते उभे चेद्भवतः ॥ ॥

तथानाड्यृक्षशुद्धौनाडीनक्षत्रयोर्वेधाभावेसतितथाताराशुद्धिवशेचसति राशिवशताभावेचराशिवश्यत्वेचसतिदुष्टभकूटकेपिविवाहः शुभोनिरु-
क्तः उक्तंचजगन्मोहनेवसिष्ठेन राशिनाथेविरुद्धेपिसबलांशकाधिपौ मित्रेपिचकन्येयंदंपत्योःसुखमिच्छतेति अन्यच्चतस्मिन्नेवप्रकरणेवसि-
ष्ठवाक्यं राशिनाथेविरुद्धेपिमित्रत्वेचांशनाथयोः विवाहंकारयेद्धीमान्दंपत्योःसौख्यवर्धनमिति अन्यच्चतस्मिन्नेवप्रकरणेवसिष्ठवाक्येषुअन्यतर-
वाक्यानर्थक्यापत्तेरुपसंहारन्याये नप्रवर्तते तेनावश्यंवाक्यद्वयस्यभिन्नोर्थस्तवाच्य तत्रकस्यकोर्थइतिसंदेहेन्यूनार्थंद्वितीयंवचनंकेवलग्रहवै-
रापवादकंतुल्यबलत्वात् अंशनाथसबलत्वाभिधायकंप्रथमवचनं उभयविरोधस्यग्रहवैरराशिवैररूपस्यापवादकं तेनराशिनाथेविरुद्धेत्यत्ररा-
शीचनाथौचएतेषांसमाहारोराशिनाथंतस्मिन्राशिनाथे तथाचायमर्थः राशीविरुद्धौषट्काष्टकादिना नाथौविरुद्धौकयोरित्याकांक्षायां ययोः

अन्यर्क्षेशयोर्बलित्वसखितेनाड्यृक्षशुद्धौतथाताराशुद्धिवशेनराशिवशता[illegible]क्तोबुधैः ३२ मैत्र्यांराशिस्वामि-
नोरंशनाथद्वंद्वस्यापिस्याद्गुणानांनदोषः खेटारित्वंनाशयेत्सद्भकूटंखेटप्रीतिश्चापिदुष्टंभकूटं ३३ ३३ ॥

षट्काष्टकादिविचारस्तयोरेवसन्निहितत्वात्ग्रहणंतयोः समुचितेसतिविवाहःशुभः नन्वस्मिन्वाक्येक्लिष्टव्याख्यानेकिंमानं उच्यते अंशनाथसबलत्व-
स्याधिककरणमेव नचयुगपदुत्पन्नस्यदोषद्वैविध्यस्यराशिविरोधग्रहविरोधरूपस्यपरिहारकरूपमित्यवगम्यते अस्मिन्नपिपक्षेनाडीशुद्धिताराशुद्धिः
राशिवश्यताचापेक्षिताइति ३२ अथदुष्टानांगणकूटभकूटानांपरिहारंशालिन्याह मैत्र्यामिति स्त्रीपुरुषयोः राशिस्वामिनोर्मैत्र्यांसत्यांतथाराशिन-
वांशनाथयोः द्वंद्वस्यापिमैत्र्यांसत्यांदुष्टगुणानांदोषोनस्यात् अत्रिः राशीशयोःसुहृद्भावेमित्रत्वेचांशनाथयोः गणादिदोषेपुद्वाहः पुत्रपौत्रप्रव-
र्धनः अथसद्भकूटंतृतीयैकादशादिकंखेटारित्वंग्रहवैरकृतंदोषंनाशयेत् एवमेवखेटप्रीतिः ग्रहमैत्रीचापिदुष्टंभकूटंषडष्टादिकंनाशयेत् अ-
सद्भकूटेगुणाभावः भकूटदोषापवादेचत्वारोगुणाइति ३३ ॥ ३३ ॥

सोदरयोर्भ्रात्रोः सहोदरकन्यके नदद्यान्नोद्वाहो नारदः नचैकजन्मनोः पुंसोरेकजन्ये तु कन्यके नूनं कदाचिदुद्वाहो नैकदा मुंडनद्वयमिति अन्यच कारोऽ
नुक्तसमुच्चयार्थस्तेनैकस्मै वरायसहोदरकन्याद्वयमपिनदेयं नपुत्रीद्वयमेकस्मै प्रदद्यात्तु क[illegible]नेतिवसिष्ठोक्तेः नसहजसुतोद्वाहोब्दार्धइति सुतस्य
सुतौसुताचसुतेसरूपाणामेकशेषइत्येकशेषः सुताचसुतौपुमान्स्त्रियेत्येकशेषः सुतौचसुताचसुतेचसुतौवेतिसुताः इतिहूनैकशेषणाद्द्वे पुमान्
स्त्रियेत्येकशेषः सहजाश्चतेसुताश्चतेसुताश्चेतिकर्मधारयः तेषांसोदरभ्रातॄणांविवाहः अब्दार्धे षण्मासमध्येनकार्यः उद्वाहइत्युपलक्षणं ततश्चैका
मातृजयोः पुत्रयोः कन्ययोर्वासमानसंस्कारेणनकार्यइत्यर्थः इदंमनुः एकमातृजयोरेकवत्सरे पुरुषस्त्रियोः नसमानाक्रियांकुर्यान्मातृभेदेविधीयते स
मानक्रियामुंडनादिकाभिन्नमातृजयोः समानक्रियायांनदोषः नारदः समानापिक्रियाः कार्यामातृभेदेतथैवच विवाहोदुहितुः कार्योनविवाहश्चतुर्दि
नमिति भिन्नमातुर्दुहितुर्विवाहः समानक्रियायांयदिदिनचतुष्टयमध्येनकार्यमित्यर्थः वसिष्ठेनविशेषउक्तः एकोदरप्रसूतानांनात्रकार्यत्रयंभवेत्
भिन्नोदरप्रसूतानांनेतिशातातपोब्रवीत्इति चौलोपनयनविवाहरूपंकार्यत्रयं आदौचौलंततोमौंजी विवाहश्चशुभप्रदः मातृभेदेबुधैरुक्तो मातुरेकौ
नकर्हिचित् एवंसति भिन्नोदरमंगलमावश्यकत्वेगृहभेदात् एकगृहे आचार्यभेदाद्वाकार्यं व[illegible]शोभनंत्वेकगृहेनचेष्टंशुभंतुपश्चात्तुविभि
न्नैस्तु आवश्यकंशोभनमुतुकोवाहारणवाचार्यविभेदतोवेति यमलजातयोस्तुयमपिनिषेधोनास्ति एकस्मिन्वत्सरेचैववासरेमंडपेतथाक
र्तव्यंमंगलंस्वसोर्भ्रात्रोर्यमलजातयोः तत्रापिज्येष्ठानुक्रमेणकार्यंज्येष्ठानुक्रमस्तुगर्भोत्पत्तिक्रमेण तथाचभागवतेतृतीयस्कंधेहिरण्याक्षहिर
ण्यकशिपूयत्नौ प्रजापतिर्नामतयोरकार्षीद्यः प्राक्स्वदेहाद्यमयोरजायत तंवैहिरण्यकशिपुंविदुः प्रयंतंजाहिरण्याक्षमसूतसाग्रतइति तथा
वैद्यके आत्रेयसंहितायां यदाविशेद्द्विधाभूतंबीजंपुष्पंपरिक्षरत् तदाभवेद्द्विधागर्भः सूतिर्वेश्मविपर्ययात् तेनप्रथमंजातःकनिष्ठः अनंतरजा
तोज्येष्ठः अतएवयमयोश्चैवगर्भेतुजन्मतोज्येष्ठतामतेतिमनुनागमेजन तदुक्तं जन्मज्येष्ठेनचाह्वानंसुब्रह्मण्यास्वपिस्मृतमिति तु मनुवचनं
एककोशजातयमलविषयं तथाचदेवलः यस्यजातस्ययमयोः पश्यंतिप्रथमंमुखं संतानः पितरश्चैवतस्मिन्ज्येष्ठंप्रतिष्ठितमिति संतानोवंशः

यदातुपुंसोबलातिशयाद्रेतसोद्विधापातः तदायोषिद्द्वयमलोत्पत्तिः यदातुगर्भेवायुनाएकस्मिन्नेवकोशेरेतसोद्वैधीभावस्तदाएककोशेएवयुगपद्युम
लजन्मेति ननुस्त्रीणांविवाहउपनयनस्थानेइतिस्मृतेः कन्याविवाहस्यपुत्रोपनयनस्यचसमानमितिचेत् नअष्टवर्षंब्राह्मणमुपनयेदितिवचने
ब्राह्मणग्रहणात्कुमारमित्यनुवृत्तेश्च स्त्रीशूद्राणांव्रतबंधनिषेधाच्च यत्तुस्त्रीणांविवाहउपनयनस्थानइत्युक्तं तत्तासांद्विजत्वसिध्यर्थं अतः स्त्रीविवाहो
विवाहएवनतूपनयनंतस्मात्सोदरकन्यापुत्रयोर्विवाहोपनयनयोः समानसंस्काराभावात् षण्मासमध्येपितेकार्ये शुभेइति शुभेविवाहादिमंगलेकृ
त्येपितृक्रियाश्राद्धक्रियानकार्या मंगलेनाप्यमंगलमितिनारदोक्तेः अमंगलंश्राद्धं समाप्तेएवमंगलेकार्यंनमध्येइत्यर्थः १६ अथप्रतिकूल
निर्णयमिदंवंशायाह वध्वावरस्येति निश्चयोत्तरंवाग्दानानंतरंवध्वाःकन्यायाः वरस्यवाकुलेवंशेत्रिपूरुषेपुरुषत्रयमध्येकश्चनसपिंडोनाशंप्राप्नुयात्
तत्रमासोत्तरं मरणदिनादारभ्यत्रिंशद्दिनंप्रतिकूलं ततः शांत्यास्वनुष्ठितयाविवाहःशुभितः[illegible]यत्रादिभिन्नविषयं मांडव्यः अन्येषांतुसपि

वध्वावरस्यापिकुलेत्रिपूरुषे नाशंव्रजेत्कश्चननिश्चयोत्तरं मासोत्तरंतत्रविवाहइष्यते शांत्याथवासूतकनिर्गमेपरैः १७॥

डानामाशौचंमाससंमितं तदंतेशांतिंकृत्वाततोलग्नंविधीयते पित्रादिमरणेतुविशेषः वरवध्वोःपितामातापितृव्यश्चसहोदरः एतेषांप्रतिकूलंचे
न्महाविघ्नकरंभवेत् पितामातामहश्चैवमातावापिपितामही पितृव्यःस्त्रीसुतोभ्राताभगिनीवाविवाहिता एभिरेवविपन्नैश्चप्रतिकूलंबुधैःस्मृतं वाग्दा
नानंतरंयत्रकुलयोः कस्यचिन्मृतिः तदासंवत्सरादूर्ध्वंविवाहःशुभदोभवेत् पितुरशौचमध्येस्यात्तदर्धंमातुरेवहि मासत्रयंतुभार्यायास्तदर्धंभ्रात
पुत्रयोः अन्यत्र प्रतिकूलंसपिंडस्यमासमेकंविवर्जयेत् विवाहस्तुतयोःपश्चात्तयोरेवविधीयते दुर्भिक्षेराष्ट्रभंगेचपित्रोर्वाप्राणसंशये प्रौढायामपि
कन्यायांप्रतिकूलंनदुष्यति दीर्घरोगाभिभूतस्यदूरदेशस्थितस्यच उदासवर्तिनश्चैवप्रतिकूलंनविद्यते संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना शां
तिरुक्तागणेशस्यकृत्वातांशुभमाचरेत् अथावश्यकत्वेऽपवादमाह अथवेति आशौचनिर्गमेशांत्यास्वनुष्ठितयाविवाहः परैराचार्यैरिष्यते ज्यो
तिःपंक्ताशेप्रतिकूलेपिकर्तव्योविवाहोमासमंतरा शांतिंविधायगांदत्वावाग्दानादिचरेद्बुधः १७

अथान्यदपि विशेषेणत्तरमुपजात्याह चूडाव्रतमिति अपिशब्दात्समावर्तनादि चौलमुपनयनं समावर्तनं च विवाहानंतरं पुरुषत्रयमध्य एव नेष्टं तथाव्र
तादुपनयनात् चूडा च पुरुषत्रयपर्यंतं नेष्टा तथा वध्वाः स्नुषायाः प्रवेशात्सुताया विनिर्गमोपि पुरुषत्रयपर्यंतमेव नेष्टा मेधातिथिः पुरुषत्रयपर्यं
तं प्रति कुलं सगोत्रिणं प्रवेशान्निर्गमोत्तमन् तथा मुंडनमंडनेइति तस्मान्मूलपुरुषस्य चतुर्थत्वेनायं दोषः स चायं दोषः पुरुषत्रयेपि षण्मासपर्यंतमेव
अतएव षण्मासइति मासषट्कानंतरं व्रतेनोपि विवाहादिः शुभः एतन्मूलवाक्यं कुलेऽकृतु त्रयादर्वागित्यादिना प्रागुक्तं अत्रापवादउच्यते वेति अथ
वा अब्दभेदात् वर्षभेदात् षण्मासमध्येपि शुभः यथा माघे विवाहो वैशाखे चौलं यज्ञोपवीतं वा भवतीत्यर्थः संहितासारावल्यां फाल्गुने चैत्रमासे तु पुत्रोद्वा
होपनायने भेदादब्दस्य कुर्वीत नतु त्रयविलंघनमिति १८ अथ मूलादनिष्टनक्षत्रोत्पन्नयोर्वधूवरयोः श्वशुरादिपीडकत्वं वसंततिलकेनाह श्वश्रूवि

चूडाव्रतं चापि विवाहतो व्रतात् चूडा च नेष्टा पुरुषत्रयांतरे वधूप्रवेशाच्च सुताविनिर्गमः षण्मासतो वाब्दविभेदतः शुभः १८ श्व
श्रूविनाशमहिजौ सुतरां विधत्तः कन्यासुतौ निर्ऋतिजौ श्वशुरं हतश्च ज्येष्ठाभजात तनया स्वधवाग्रजं च शक्राग्निजा भवति
देवरनाशकर्त्री १९ द्वीशाद्यपादत्रयजा कन्या देवरसौख्यदा॥ ११ नाशमिति अहिजौ अश्लेषानक्षत्रोत्पन्नौ कन्यापुत्रौ श्वश्र्वाः सासाहू
स्वमातुः कन्यायाश्वासास्तान्मातुः नाशं विधत्तः कुरुतः तथा निर्ऋतिजौ मूलोत्पन्नौ श्वशुरं हतः नाशयतः जनकं जनहीहंति भर्तुर्मूलाहि धिष्ण्यजौ निवसिष्ठो
क्तेः कुलन्यायत्वात्कन्यायामपि सास्तान्मातरं ज्येष्ठेति ज्येष्ठानक्षत्रोत्पन्ना कन्या स्वधवाग्रजं भर्तुर्ज्येष्ठभ्रातरं हंति शक्राग्निजा विशाखोत्पन्ना देवरस्य भर्तुः एम:
कनिष्ठभ्रातुर्नाशकर्त्री उक्तंच ऐंद्रीपत्यग्रजं हंति देवरं तु द्विदैवजेति १९ एतदपवादमनुष्टुभाह द्वीशाद्येति स्पष्टार्थं नहंति देवरं कन्या तुलाभिश्चाद्वि
दैवजा तदंत्यपादजात्याज्या दुष्टा वृश्चिकपुच्छवदिति वृद्धनारदोक्तेः मूलेति मूलचतुर्थचरणोत्पन्नौ कन्यासुतौ श्वशुरे सौख्यदौ आश्लेषाप्रथमचरणोत्प
न्नौ च श्वश्र्वाः सौख्यदौ नारदः सुतः सुताश्चानियतं श्वशुरं हंति मूलजौ तदंत्यपादजौ नैव तथाश्लेषाद्यपादजाविति॥ ॥

पुंस्त्वमविवक्षितं ज्योतिर्निबंधे मौंजीबंधे तानंतरं मूलाश्लेषादोषो नास्तीत्युक्तं मूलव्यालोद्भवो दोषः पुंसामेवं ज्यांविनश्यतीति भूपालवल्लभवचनादि ति तंनमूलाश्लेषादोषः शूद्रविषयः पर्यवस्यति तथाज्येष्ठोत्पन्नःपुमान् पत्युरग्रजमग्रजां वाहंति विशाखोत्पन्नश्चपत्युरनुजमनुजाहंति उक्तंचकल त्रपटले पत्युरग्रजामग्रजं वाहंतिज्येष्ठर्क्षजःपुमान् तथाभार्यानुजां चैवानुजंहंतिद्विदैवजइत्युक्तं तत्परिहारस्तत्रैव मूलांत्यपादजोश्रेष्ठोतथाश्ले षाद्यपादजोद्वीशांत्यपादजोदुष्टोनहज्येष्ठांत्यपादजाविति ज्येष्ठाविशाखोत्पन्नपुंसः दोषतत्परिहारनिरूपणंग्रंथेषद्रष्टव्यादुपेक्ष्यं २० अथाष्ट कूटानांनामान्यनुष्टुभाह वर्णइति एतेवर्णादिमैत्र्यांसत्यांगुणाधिका एकादिगुणाधिकाःस्युःयथावर्णमैत्र्यामेकोगुणःवश्येद्वावित्यादि २१ तत्रा दौवर्णकूटंप्रमाणिकयाह द्विजाइति मीनकर्कटवृश्चिकाद्विजाःब्राह्मणाः ततोनंतरमन्येमेषसिंहधनूराशयोनृपाःक्षत्रियाः वृषकन्यामकरावि

मूलांत्यपादसार्पाद्यपादजातेतयोःशुभे २० वर्णोवश्यंतथातारायोनिश्चग्रहमैत्रकं गणमैत्रंभकूटंचनाडीचैतेगुणाधि काः २१ द्विजाझषालिकर्कटास्ततोनृपाविशोंघ्रिजाः वरस्यवर्णतोधिकावधूर्नशस्यतेबुधैः २२ हित्वामृगेंद्रंनरराशिव श्याःसर्वेतथैषांजलजाश्चभक्ष्याः सर्वेपिसिंहस्यवशेविनालिंज्ञेयंनराणांव्यवहारतोऽन्यत्॥ २३ ॥ ॥

श्योवैश्याःमिथुनतुलाकुंभाःअंघ्रिजाःशूद्राः तत्रवरवधूराश्योर्वर्णौज्ञात्वावरस्यवर्णतोब्राह्मणादिकावधूरधिकाज्येष्ठवर्णाबुधैर्नशस्यतेकिंतु समाहीनावाशस्तेत्यर्थः एकोगुणःसदृग्वर्णेतथावर्णोत्तमेवरे हीनवर्णेवरेशून्यंकेप्याहुःसदृशेदलमिति २२ अथवश्यकूटमिंद्रवज्रयाह हित्वेति नरराश्योमिथुनकन्यातुलाएषांमेषादयःसर्वेपिसिंहंत्यक्त्वावश्याः ननुजलचराणांसहानवस्थानात् कथंवश्यत्वं तत्राह जलजास्तुभक्ष्याइति एषांन रराशीनांजलजाःमकरकुंभमीनंकर्कास्तुभक्ष्याः किंपुनर्वश्याइतिसूचयितुंतुशब्दः सिंहस्यालिंवृश्चिकंविनासर्वेवश्याः अन्यदन्तुकंचतुष्पदानांज लचराणांवश्यावश्यंनराणांमनुष्याणांव्यवहारतोज्ञेयं वश्यकूटंवश्यभक्ष्यवैरभेदेनत्रिधा तत्रवराशेः स्त्रीराशौवश्येसतिगुणद्वयं भक्ष्येएकोगुणःवैरेगु

अथकन्याविवाहकालंग्रहशुद्धिंचवसंतमालिकाछंदसाह गुरुशुद्धिवशेनेति कन्यकानांविवाहः षडब्दकोपरिष्टात् षड्वर्षातिक्रमानंतरंसमेवर्षे
ष्वयुग्मवर्षेषुसत्संवत्सर वटुकन्याजन्मराशेरित्याद्युक्तगुरुशुद्धौसत्यांविवाहःशुभः अर्थात्पुरुषाणांविषमवर्षेषुगोचरप्रकारेणोक्तरविशुद्धौसत्यांविवाहः
शुभः राजमार्तंडः तृतीयः षष्ठगश्चैवदशमैकादशस्थितः रविशुद्धोनिगदितो वरस्यैवकरग्रहे जन्मस्थेचद्वितीयस्थेपंचमेसप्तमेपिवानवमेभास्करे
पूजाकुर्यात्पाणिग्रहोत्सवे चतुर्थेवाष्टमेचैवद्वादशेभास्करेस्थिते वरःपंचत्वमाप्नोतिकृतेपाणिग्रहोत्सवेइति यत्तूक्तं षडब्दमध्येनोद्वाह्याकन्यावर्षा
द्वयंयतः सोमोभुंक्तोथ्यगंधर्वस्ततः पश्चाद्धुताशनइति व्यासः अष्टवर्षाभवेद्गौरीनववर्षाचरोहिणी दशवर्षाभवेत्कन्याअतऊर्ध्वंरजस्वला वात्स्यः
द्वादशेष्टवर्षीस्मृतेतिगौरींददद्ब्रह्मलोकंसावित्रंरोहिणींददत् कन्यांददत्स्वर्गलोकमतःपरमसद्गतिं प्राप्नोतीतिशेषः अत्र युग्मेब्देजन्मतःस्त्रीणांशुभदं
पाणिपीडनमित्युक्तत्वात् पुनर्नववर्षायारोहिण्याअयुग्मवर्षत्वाद्विवाहनिषेधःप्राप्नोतीत्यत्रव्यवस्थामाहश्रीपतिःमासत्रयादूर्ध्वमयुग्मवर्षेयुग्मेतुमा

गुरुशुद्धिवशेनकन्यकानांसमवर्षेषुषडब्दकोपरिष्टात् रविशुद्धिवशाच्छुभोनराणामुभयोश्चंद्रविशुद्धितोविवाहः १२ मि
थुनकुंभमृगालिवृषाजगेमिथुनगेपिरवौत्रिलवेशुचेः॥ ॥ सत्रयमेवयावत्विवाहंशुभंप्रवदंतिसंतोवात्स्यादयोगर्गवराहमुख्याःइत्यतो

नवमवर्षस्यायुग्मत्वनिषेधोऽष्टवर्षानंतरंमासत्रयपर्यंतमेव तदनंतरंतुसुखेनविवाहइत्यविरोधः एवंचषष्ठवर्षानंतरंजन्मतोविषमवर्षायामासत्रयानं
तरंनवमासाःशुभाः समवर्षेआद्यमासत्रयंत्रयंचेतिगर्भतोयुग्मवर्षइतिनिष्कृष्टोऽर्थः उभयोरिति स्त्रीपुंसयोश्चंद्रविशुद्धितोविवाहःशुभः उभयोश्चंद्रब
लमावश्यकमित्यर्थः शुद्धिर्गोचरेणाभिहिता गोचरबलाभावेअष्टकवर्गादिबलंग्राह्यमित्याहनारदः गोचरंवेधजंचाष्टवर्गजंरूपजंबलं यथोत्तरंबलाधि
क्यंस्थूलंगोचरमार्गजमिति व्यासःकन्यायाग्रहशुद्धिश्चदशवर्षावधिस्मृता दशवर्षव्यतिक्रांताकन्याशुद्धिविवर्जिता तस्यास्तारेंदुलग्नानांशुद्धौपाणिग्र
होमतइति १२ अथविहितान्मासान्दुतस्थितेरवौतेनाह मिथुनेति अलिर्वृश्चिकः एतद्राशिगतेरवौसतितत्चापिमिथुनस्थितेरवौसतिशुचेःआषाढस्यत्रिलवे

मु॰ चिं॰ टी॰

आषाढशुक्लप्रतिपदमारभ्य दशमीपर्यंतं करपीडनं विवाहो भवति अर्थादितरराशिगे सूर्ये आषाढशुक्लदशम्यनंतरं मिथुनराशिगेर्केपि हरिशयने च विवाहो न स्यात् अलीति एतद्राशिगे सूर्ये कार्तिकपौषमधुष्वपि करपीडनं स्यात् वृश्चिके कार्तिके मकरे पौषे मेषे चैत्रेपीत्यर्थः इदं तु सौरमासग्रहणं मतं श्रीधरोपि पौषेपि कुर्यान्मकरस्थिते र्के चैत्रे मेषगतेपि तदा स्यात् प्रशस्तमाषाढकृतं विवाहं वदंति गर्गो मिथुनस्थिते र्के इति येतु चांद्रमासानिवाहुर्नारदादयः माघफाल्गुनवैशाखज्येष्ठमासाः शुभप्रदाः मध्यमः कार्तिके मार्गशीर्षे वै निंदिताः परे इति तेषां मते फाल्गुनो विहित इति तत्र मीनसंक्रमणसद्भावेपि शुभः चैत्रो निषिद्ध इति मेषसंक्रमणसद्भावेप्यशुभः तदुक्तं वृंदावने शबोनन्निंद्यो यदि फाल्गुने स्यादजस्तु वैशाखगतो न निंद्यः मध्वाश्रितो द्वावपि वर्जनीयाविति अजस्तु वैशाखगतो न निंद्य इति निर्मूलमेव वस्तुतस्तु वसिष्ठेन उभयमासविधानात्सौरचांद्रमासैक्ये उत्तमो विवाहः एकतरपक्षाश्रयेण मध्यमः दिनाधिपे मेषवृषालिकुंभनृयुग्मनक्रास्य घटर्क्षसंस्थे माघद्वये माधवशुक्रयोश्च शुचौ अथवा कार्तिकसौम्ययोश्चेति अथ प्रसंगात्सौरचांद्रमासविधायकवचनानि तेषां व्या

अलिमृगाजगते करपीडनं भवति कार्तिकपौषमधुष्वपि १३

ख्या च लिख्यते तत्रऋष्यशृंगः विवाहव्रतयज्ञेषु सौरमानं प्रशस्यते गार्ग्योपि विवाहोत्सवयज्ञेषु सौरमानं प्रशस्यते वृद्धगर्गः विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः इत्येवमादीनि सौरमासविधायकवचनानि अथ चांद्रमासविधायकानि तथा च वसिष्ठः उद्वाहयज्ञोपनयप्रतिष्ठा तिथिव्रतं सौरमहोत्सवाद्यं पर्वक्रिया वास्तु गृहप्रवेशास्सर्वे हि चांद्रेण विगृह्य तेतत् नारदः यात्रोद्वाहव्रतक्षौरतिथिवर्षेशनिर्णयं पर्ववास्तूपवासादि कृत्स्नं चांद्रेण गृह्यते इत्यादीनि तत्रैकतरमासावलंबने परवैयर्थ्यं स्यादित्यत्र समाधीयते यत्र सौरचांद्रमानाभ्यां मासशुद्धिरुपलभ्यते स उत्तमो विवाहः एकतरपक्षावलंबने मध्यम इत्युक्तं प्राक् मध्यमपक्षावलंबनं च अवश्यदेयाकन्याविषयं वेदितव्यं अपरे तु नर्मदे शविवाहयोः तथा तपनीकृष्णयोर्मध्ये चांद्रो मासः प्रशस्यते अन्येषु सर्वदेशेषु सौरो व्रतविवाहयोः तथा विंध्याद्रेर्दक्षिणे भागे चांद्रो मासः प्रशस्यते उदग्भागे तु विंध्यस्य सौरमानं विधीयते अन्येषु सर्वदेशेषु मिश्रं मा

अथमासप्रसंगाज्जन्ममासादिप्रयुक्तनिषेधविधीन्वयोद्वृत्तयाह आद्येति यस्मिन् चांद्रेमासेजन्मसजन्ममासः जन्मतिथिमारभ्यत्रिंशत्तिथ्यात्मकोमासो
जन्ममासः यत्रमासेजन्मसजन्ममासःइतिवृत्च्यते पक्षद्वयमध्येप्रथमप्रकारेणप्रतिपादितं जन्मनक्षत्रंजन्मतिथिः समाहारद्वंद्वः जन्ममुहूर्त्तोपि तत्राद्यग
र्भयोः सुतकन्ययोर्द्वयोः करग्रहोविवाहोनोचितः निषिद्धः वसिष्ठः स्वजन्ममासर्क्षतिथिक्षणेषुवैनाशिकाद्यृक्षगणेषुचैवं नोद्वाहमात्मप्रभुदयाभिकांक्षी
नैवाद्यगर्भेद्वितयंकदाचित् एतदपवादोपि जातंद्विविषयंतेवसिष्ठइत्यादिपूर्वमुक्तः अथेति द्वितीयजनुषोरनाद्यगर्भयोश्चेद्विवाहस्तर्हिसुतप्रदोविबु
धैः पंडितैः शस्यते अत्राद्यगर्भराहित्यंसर्वथाविवक्षितं अथवाचेदनाद्यजनुषोरितिपठितव्यं तथाचच्यवनः जन्मर्क्षेजन्ममासेवातत्रापायामथजन्मनि
जन्मलग्नेभवेद्वोढापुत्रांढ्यापतिवल्लभेति एतच्चानाद्यगर्भविषयं आद्यगर्भेसासान्निषेधात् १५ ज्येष्ठमासेविशेषंशालिन्याह ज्येष्ठद्वंद्वमितिपुत्रोज्येष्ठः

आद्यगर्भसुतकन्ययोर्द्वयोर्जन्ममासभतिथौकरग्रहः नोचितोथविबुधैःप्रशस्यतेचेद्द्वितीयजनुषोःसुतप्रदः १४ ज्येष्ठ
द्वंद्वंमध्यमंसंप्रदिष्टंत्रिज्येष्ठंचेन्नैवयुक्तंकदापि॥ ११ कन्याज्येष्ठा मासोपिज्येष्ठः इत्येतत्त्रिज्येष्ठंत्रिज्येष्ठंयत्कदापिनैवयुक्तंनप्रशस्तं ज्ये
ष्ठमासेज्येष्ठयोर्वधूवरयोर्विवाहोनैवकार्यइत्यर्थः यदात्वेकतरज्येष्ठत्वेज्येष्ठमासोभवतितदामध्यमंसंप्रदिष्टं आगतिविषयकमित्यर्थः एकंज्येष्ठ
मन्यद्द्वयमज्येष्ठंतदाशुभमेव वराहः द्वौज्येष्ठौमध्यमौप्रोक्तावेकज्येष्ठः शुभावहः ज्येष्ठत्रयंनकुर्वीतविवाहेसर्वसंमतं अस्यापवादमाहकेचिदिति
सत्यावश्यकत्वेसूर्येवह्निगंकृत्तिकास्थंत्यक्त्वाज्येष्ठमासेपिज्येष्ठवरस्यकन्यकायाः विवाहः शुभइतिकेचिदूचुः एतच्चज्येष्ठापत्यस्यनज्येष्ठेइतिसामा
न्यतोमंगलकृत्यनिषेधेपिद्रष्टव्यं भरद्वाजः ज्येष्ठेज्येष्ठस्यकुर्वीतभास्करेचानलस्थिते नोत्सवादीनिकार्याणिदिनानिदशवर्जयेदिति अत्रज्येष्ठपुत्र
दुहित्रोर्ज्येष्ठमासवतमार्गशीर्षेपिमंगलकृत्यनिषेधमाह भरद्वाजः मार्गशीर्षेतथाज्येष्ठेक्षौरंपरिणयंव्रतं आद्यगर्भदुहित्रोस्तुयत्नेनपरिवर्जयेदिति

मु०टी०
वि०प्र०
६६

यमपिज्येष्ठापत्यस्यनज्येष्ठे केश्चिन्मार्गेपिनेष्यत इत्युक्तं प्राक् केचिद्ग्रहणं शिष्टाचाराभावादितिसूचयितुं नैवान्योन्यमिति॥ ॥ज्येष्ठायाः कन्या
याः ज्येष्ठपुत्रेणसहविवाहोनैवस्यात् गर्गः ज्येष्ठायाः कन्यकायाश्चज्येष्ठपुत्रस्यवैमिथः विवाहोनैवकर्तव्योयदिस्यान्निधनंतयोरिति १५ अ
थान्यंविशेषंहरिणीछंदसाह सुतपरिणयादिति निजकुलेइतिदेहलीदीपन्यायेनात्रापिसंबध्यते निजकुलेस्ववंशेसुतस्यपुत्रस्यपरिणयात्षण्मासां
नः षण्मासमध्येसुताकरपीडनेकन्याविवाहोनस्यात् नारदः पुत्रोद्वाहात्परंपुत्रीविवाहोनऋतुत्रये नतयोर्व्रतमुद्वाहान्मंडनादपिमुंडनमिति तद्वदि
ति निजकुलेत्रिपुरुषमध्येपुत्रस्यकन्यायावामंडनाद्विवाहान्मुंडनंचौलोपनयनंसमावर्तनादिवातद्वत् षण्मासमध्येनकार्यं अग्निः कुलेऋतुत्रया
र्वाग्मंडनान्नतुमुंडनंप्रवेशान्निर्गमंचैवनकुर्यान्मंडनत्रयमिति अत्रविशेषः शार्ङ्गीये व्रतंस[illegible]नकेचौलकंशांतमेतानिवदंतितज्ज्ञाः सौरंपुरस्कृ

केचित्सूर्यंवह्निगंप्राहुश्चाहुर्नैवान्योन्यंज्येष्ठयोः स्याद्विवाहः १५ सुतपरिणयात्षण्मासांतः सुताकरपीडनंनचनिजकुलेत
द्वद्वाहान्मंडनादपिमुंडनं नचसहजयोर्देयेभ्रात्रोः सहोदरकन्यकेनसहजसुतोद्वाहोर्धाब्देशुभेनपितृक्रिया १६ ॥ ॥

त्यभवंतियस्मात्त्वरितस्मादिहमुंडनानि चूडासीमंतकेशांतविवाहोपनयान्बुधाः गुरुमंगलमित्याहुस्तदन्यल्लघुमंगलं ज्येष्ठकृतात्तुषण्मासं
नकुर्याल्लघुमंगलं कुर्वंतिमुनयः केचिदन्यस्मिन्नपिवत्सरेलघुवामंगलंकार्यकार्यंनैमित्तिकंहितु पुत्रोद्वाहः प्रवेशाख्यः कन्योद्वाहस्तुनिर्गमः मुंडनं
चौलमित्युक्तं व्रतोद्वाहौतुमंगलं चौलंमुंडनमेवोक्तंवर्जयेद्वरणात्परं मौंजीतूभयतः कार्यायतोमौंजीनमुंडनं अभिन्नेवत्सरेपिस्यात्तदहस्तत्रभेदयेत्
अभेदेदिवसस्यापिनकुर्यादेकमंडपइति एषांसमूलत्वेदेशकालसंकटेसतिबोद्धव्यं उक्तंच एकोदरयोर्द्वयोरेकदिनोद्वहनेभवेन्नाशः नद्यंतर
एवैकेदिनेप्याहुः संकटेचशुभं नप्रतिषिद्धंलग्नसंप्राप्तेसंकटेमहति एकोदरसंभवयोरेकाहेभिन्नमंडपेकालेइति नचेति सहजयोः॥ ॥

राम:
६६

अथ प्रश्नलग्नात्कुलटात्वमृतवत्सायोगं दोधकवृत्तेनाह प्रश्नतनोरिति स्पष्टार्थः कश्चेत्पः खनीचगः शत्रुदृष्टः पापः पंचमगो यदा मृतपुत्रां करोत्येव कु
लटां वा न संशयकृते ५ अथ विवाहभंगयोगं पुष्पिताग्रयाह यदीति सितातिरिक्तपक्षे कृष्णपक्षे यदि चंद्रः समराशिषु वृषकर्कादिषु गतः सन् तनुगृ
हतः प्रश्नलग्नादरिरंध्रे षष्ठे अष्टमे वा लग्ने स्थितः पापग्रहावलोकितो भवति तदायं योगो विवाहस्य विनाशकारको भवति ६ एवं प्रश्नलग्नाद्वैधव्यादियो
गमभिधायेदानीं जन्मलग्नादावपि बालवैधव्ययोगविचारमतिदिशन् तत्परिहारं शार्दूलविक्रीडितेनाह जन्मोत्थमिति प्रश्नलग्नाद्यथा विधवायोगो
विचारितस्तथा जन्मोत्थं जन्मलग्नोद्भवं बालविधवायोगं जातकशास्त्रात् बाल्ये विधवा भौमे पतिसंत्यक्ता दिवाकरे तस्य सौरे पापे दृष्टे कन्यैव जरां समु

प्रश्नतनोर्यदि पापनभोगः पंचमगो रिपुदृष्टशरीरः नीचगतश्च तदा खलु कन्या सा कुलटा त्वथवा मृतवत्सा ५ यदि भवति सि
तातिरिक्तपक्षे तनुगृहतः समराशिगः शशांकः अशुभखचरवीक्षितोऽरिरंध्रे भवति विवाहविनाशकारकोयं ६ जन्मोत्थंच
विलोक्य बालविधवायोगं विधाय व्रतं सावित्र्याअथपैप्पलं हि सुतया दद्यादिमां वा रहः सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा
विवाहं स्फुटं दद्यात्तां चिरजीविनेत्र न भवेद्दोषः पुनर्भूभवः ७॥

पयाति तथा लग्ने व्यये च पाताले जामित्रे चाष्टमे कुजे कन्या भर्तृविना
शाय भर्ता कन्याविनाशद इत्याद्युक्ते बालवैधव्ययोगे बालविधवायोगं विचार्य वक्ष्यमाणं व्रतं वैधव्ययोगपरिहारं कारयेदित्यन्वयः तत्र वैधव्ययोग
परिहाराभावः योयोभावः स्वामिदृष्टयुतो वा सौम्यैर्वा सात्र सबलस्तस्यास्ति वृद्धिरिति सप्तमस्थानं स्वस्वामिसौम्येक्षितं चेद्भवति तदा भर्तृसुखं भवतीति अ
न्यसौ नाम ह तत्परिहृष्टयोगे भर्तुश्च स्वस्य रिष्टयोगे तत्परिहारमाहुः अथवा परिहार्ये वैधव्ययोगे प्रतिकारमाह विधायेति रह इति वक्ष्यमाणमिहापि
योज्यं पित्रादिः सुतया कन्यया कृत्वा रहः एकांते हि निश्चयेन [illegible] व्रतं विधाय पश्चादिमां कन्यां चिरजीविने वराय दद्यात् तदुक्तं व्रतखंडे सावि
त्र्यादि व्रतादीनि भक्त्या कुर्वंति याः स्त्रियः सौभाग्यं चतुरं [illegible] सुसंततिमिति व्रतग्रहणप्रकारस्तत एवावगंतव्यः पिप्पलव्रतं ज्ञानभा

अथ प्रश्नलग्नात्कुलटामृतवत्सायोगं दोधकवृत्तेनाह प्रश्नतनोरिति स्पष्टार्थः कश्चपः स्वनीचगः शत्रुदृष्टः पापः पंचमगो यदा मृतपुत्रां करोत्येवं कु
लटां चानसंशय इति ५ अथ विवाहभंगयोगं पुष्पिताग्रयाह यदीति सितातिरिक्तपक्षे कृष्णपक्षे यदि चंद्रः समराशिषु वृषकर्कादिषु गतः सन् तनुगृ
हतः प्रश्नलग्नादरिरंध्रे षष्ठेऽष्टमे वा स्थाने स्थितः पापग्रहावलोकितो भवति तदायं योगो विवाहस्य विनाशकारको भवति ६ एवं प्रश्नलग्नाद्वैधव्यादियो
गमभिधायेदानीं जन्मलग्नाद्वावपि बालवैधव्ययोगविचारमतिदिशन् तत्परिहारं शार्दूलविक्रीडितेनाह जन्मोत्थमिति प्रश्नलग्नाद्यथा विधवायोगो
विचारितस्तथा जन्मोत्थं जन्मलग्नोद्भवं बालविधवायोगं जातकशास्त्रात् बाल्ये विधवा भौमे पतिसंत्यक्ता दिवाकरे तस्मिन् सौरे पापेक्षिते कन्यैव जरां समु

प्रश्नतनोर्यदि पापनभोगः पंचमगो रिपुदृष्टशरीरः नीचगतश्च तदा खलु कन्या सा कुलटाथ च वा मृतवत्सा ५ यदि भवति सि
तातिरिक्तपक्षे तनुगृहतः समराशिगः शशांकः अशुभखचरवीक्षितोऽरिरंध्रे भवति विवाहविनाशकारकोऽयं ६ जन्मोत्थं च
विलोक्य बालविधवायोगं विधाय व्रतं सावित्र्या उत पैप्पलं हि सुतया दद्यादिमां वा रहः सल्लग्नेऽच्युतमूर्तिपिप्पलघटैः कृत्वा
विवाहं स्फुटं दद्यात्तां चिरजीविनेऽत्र न भवेद्दोषः पुनर्भूभवः ७ ॥ पद्याति तथा [illegible] व्यये च पाताले जामित्रे चाष्टमे कुजे कन्या भर्तृविना

शाय भर्ता कन्याविनाशद इत्यादिकैर्बालवैधव्ययोगं बालविधवायोगं विचार्य वक्ष्यमाणव्रतं वैधव्ययोगपरिहारं कारयेदित्यन्वयः तत्र वैधव्ययोग
परिहाराभावः यो यो भावः स्वामिदृष्टो युतो वा सौम्यैर्वा स्यात्तस्य तस्यास्ति वृद्धिरिति सप्तमस्थानं स्वस्वामिसौम्येक्षितं चेद्भवति तदा भर्तृसुखं भवतीति अ
न्यस्त्रीणामहत्परिष्टयोगे भर्तुश्च स्वस्यैवारिष्टयोगे तत्परिहारमाह अथवा परिहार्ये वैधव्ययोगे प्रतिकारमाह विधायेति रह इति वक्ष्यमाणमिहापि
योज्यं पित्रादिः सुतया कन्यया कृत्वा रह एकांते हि निश्चयेन [illegible] व्रतं विधाय पश्चादिमां कन्यां चिरजीविने वराय दद्यात् तदुक्तं व्रतखंडे सावि
त्र्यादिव्रतादीनि भक्त्या कुर्वंति याः स्त्रियः सौभाग्यं च सुतं [illegible] सुखं तेषामिति व्रतग्रहणप्रकारस्तत एवावगंतव्यः पिप्पलव्रतं ज्ञानभा

स्करे बलवद्वैधव्ययोगेवास्येसति मृगीदृशां पिनाहसिकुर्वीतनद्गंगशालसंमतं सुदिनेशुभनक्षत्रे चंद्रताराबलान्विते अवैधव्यकरैर्योगैर्लग्नेग्रहबला
न्विते व्रतारंभंप्रकुर्वीतबालवैधव्यनाशकं सुस्नातांचित्रवस्त्रांयांकन्यांपितृगृहाद्बहिः नीत्वाश्वत्थंशमीस्थानेयद्वाबदरिकाश्रमे आलवालंप्रकुर्वीतवि
पुलंसुदृकर्षितं कुमार्याचार्यनिर्दिष्टं कृतसंकल्पमादरात् करकांबुप्रपूर्णेनसिंचनंप्रतिवासरं चैत्रेवाश्विनमासेचतृतीयाऽसितपक्षतः यावत्कृष्णतृती
यान्यामासमेकंयथाविधि ब्राह्मणानांतथास्त्रीणांपूजनंचसमाचरेत् तदाशिषानुयात्कन्यासौभाग्यंचसुखान्वितं प्रतिमापार्वतीनाम्नीवैणवेभाजनेचं
येत् चंद्रनाक्षतदूर्वाद्यैर्बिल्वपत्रैर्यथाविधि उपचारैर्यथाभक्त्यानैवेद्यैःप्रतिवासरं एवंव्रतप्रभावेनबालवैधव्यनिष्कृतिः जायतेकन्यकानांचततः॥
पाणिग्रहक्रिया इत्यश्वत्थव्रतं अन्यमपिवैधव्ययोगपरिहारमाह वारह इत्यादि अथवारहएकांते अच्युतमूर्तिर्विष्णुप्रतिमा पिप्पलघटौप्रसिद्धौ
एषांमध्येऽन्यतरेणसहसल्लग्नेवक्ष्यमाणदोषरहितेसौभाग्यगुणान्वितेचविवाहलग्नेविवाहंकारयित्वापश्चात्तांकन्यांस्फुटंलोकप्रसिद्धंयथा
भवतितथाचिरजीविनेवरायदद्यात् दत्वापित्रादिकः तदुक्तंमार्कंडेयेन बालवैधव्ययोगेपिकुंभद्रुमप्रतिमादिभिः कृत्वालग्नंरहःपश्चात्कन्यो
द्वाह्येतिचापरेइति कुंभइतिमंत्रान्यास्त्रपिउपलक्षणं द्रुइतिअश्वत्थएव प्रतिमाविष्णोःसौवर्णीकरशिरोवयवादिसहिता नशालिग्रामादिरूपा
तत्रकुंभविवाहः सूर्यारुणसंवादे विवाहात्पूर्वकालेतुचंद्रताराबलेशुभे विवाहांकेचमंथयन्याकुंभेनसहचोद्वहेत् पितासंकल्प्यबाहांचविवाह
विधिपूर्वकं सूत्रेणावेष्टयेत्पश्चाद्दशतंतुविधानतः कुंभमालंकृतंदेहतयोरेकांतमंदिरे ततःकुंभविनिःसार्यप्रभज्यसलिलाशये ततोभिषेचनंकु
र्यात्पंचपल्लववारिभिः ततःसर्ववस्त्रपूजाद्यंब्राह्मणायनिवेद्यच कन्यालंकारवस्त्राद्यंब्राह्मणायनिवेदयेत् प्रार्थना वरुणांगस्वरूपत्वंजीवनानांसमा
श्रयपतिंजीवयकन्यायाः चिरपुत्रान्सुखंवरं देहिविष्णुवरान् देनकन्यापालयदुःखतइति इतिकुंभविवाहः अश्वत्थविवाहोपितत्रैव द्विजानुरुक्तु
हत्वारोमंगलोच्चारणैः समं आहूयोद्वाहकालेचरम्यभूमौच मंडपेगत्वाप्रणम्यगौरीचगणनाथंचभूरुहं भवानीचैवमंथानीपितामंत्रमुदीरयेत् उ
द्वाहयिष्येविधिवदश्वत्थेनमनोहरं कन्यासौभाग्यसौख्यार्थंहेतवेहंद्विजोत्तमाः नमस्तेविष्णुरूपायजगदानंदहेतवे पितृदेवमनुष्याणामा

अयाय नमोनमः वनानांपतयेतुभ्यंविष्णुरूपायभूरुह नमोनित्य तपापौघनाशनायनमोनमः पूर्वजन्मकृतंपापंबालवैधव्यकारकं नाशयाशुसुखंदेहिक
न्यायाममभूरुह इत्यश्वत्थविवाहे संकल्पप्रार्थने विवाहतुलकुंभविवाहवद्विधेयः एवमेवसौवर्ण्योविष्णुप्रतिमयासहविवाहंविधायप्रतिमांब्राह्मणायद
द्यात् दानप्रकारस्तत्रैवशुभेमासेसितेपक्षेसानुकूलग्रहेदिने ब्राह्मणंसाधुमामंत्र्यसंपूज्यविधिवार्हणैः तस्मैदद्याद्विधानेनविष्णोर्मूर्तिंचतुर्भुजां शुद्धवर्ण
सुवर्णेनवित्तशक्त्याथवापुनः निर्मितांरुचिरांशंखगदाचक्राब्जसंयुतां दधानांवाससीपीतेकुमुदोत्पलमालिनां सदक्षिणांचतांदद्यान्मंत्रमेतमुदीरये
त् यन्मयापूर्वजनुषिघ्नन्त्यापतिसमागमं विषोपविषशस्त्राद्यैर्हतोवातिविरक्तया प्राप्यमाणमहाघोरयशःसौख्यधनापहं वैधव्याद्यतिदुःखौघनाश
यसुखलब्धये बहुसौभाग्यलब्ध्यैचमहाविष्णोरिमांतनुं सौवर्णीनिर्मितांशक्त्यातुभ्यंसंप्रददेद्विज अनघास्त्वहमस्मीतित्रिवारंप्रवदेदिति एवमस्त्वि
तिविप्राशीर्गृहीत्वास्वगृहंविशेत् ततोविवाहिकंतांतोविधिंकुर्यान्मृगीदृशां इतिप्रतिमादानविधिः एवंघटादिभिःसहविवाहंएकांतेविधायपश्चाद्दा
दित्रयघोषपुरःसरंपित्रादिकन्यामायुष्मतेवरायदद्यात् अत्रपुनर्विवाहात्पुनर्भूत्वादोषोनभवति यतोविधानखंडे स्वर्णांबुपिप्पलानांचप्रतिमा
विष्णुरूपिणीतयासहविवाहेचपुनर्भूत्वंनजायतइत्युक्तत्वात् चकारात्घटस्यापि लक्ष्मीरूपासदाकन्याहरिरूपंसदाजलं हरेर्दत्तंचयद्दानंदातुः
पापहरंसदा लक्ष्मीनारायणप्रीत्यैयादत्ताकन्यकाबुधैः तारयेत्सकलंदातुः कुलंपूर्वापरंसदा चंद्रवंह्निबुगंधर्वेष्विवसोमस्त्वगाइमे पतयःकन्यकानां
चबाल्यात्संतिसद्देवैस्तद्दुद्वाहविधियैनात्कृतोनोजनयेदयं ययातिशुक्रकमलदेवानांपूजनायवै अर्हेभवतिसर्वत्रतथाकन्यानृणांभवेत् श्रुतावपि
सोमादिभिःसहविवाहाः विहिताः सोमःप्रथमोविविदेगंधर्वोविविदउत्तरः तृतीयोऽग्निष्टेपतिस्तुरीयस्तेमनुष्यजाइति अतोदैवतभोग्यानांकन्यानां
पुरुषविवाहेनदोषःपुनर्भुवः तथात्रापि अतएवमंथन्याभास्करायतनात्कृतंवान्दुहितुर्विधिः रेणुकापिस्वकन्यायास्तरूद्वाहंचकारसइतिविधानखंडे
भिधानात् अतएव पित्रामात्रातथाभ्रात्रादत्तायातोयधारया विप्राग्निसुहृदांसाक्ष्यंकृत्वासोद्वाहिताभवेदिति कात्यायनादिपरिभाषितत्वादेकदाक
न्यापुरुषविवाहंनिर्वर्त्यपुनर्द्वितीयपुरुषविवाहजातेसापुनर्भूरेवेत्यलं ७ ॥

अथान्यत्त्वमिप्याह प्रश्नलग्नक्षणेति तत्र ज्योतिर्वित्समीपे याहशापत्ययुक्ता याहशापत्यमेव विवृणोऽतेकन्यके सुतादि शेषंस्पष्टं ८ अथ सामान्य
तोनिमित्तवशेन शुभाशुभप्रश्नलग्निमिप्याह शंखभेरीति विपंचीवीणांच एतेषांरवैः प्रश्नलग्ने श्रुतैर्मंगलंजायते उपलक्षणत्वान्मनोह्लादितुरगगज
हस्त्यादिसान्निध्येपिशुभं अथाशुभयोगाः वैपरीत्यमिति वायसःकाकः खरोगर्दभः श्वाकुक्कुरः सृगालः प्रसिद्धः यदिप्रश्नलग्नक्षणेत्वयदिवायसा
दिर्नादंशब्दंकरोतितदावैपरीत्यमशुभंलक्षयेत् उपलक्षणादुलूकोधूमहिषनादोप्यशुभः अन्येशुभयोगाःशोनकादिभ्योज्ञेयाः विवाहहंदावनेउप
श्रुतिरप्युक्ता आरोप्याक्षतपूरितेगणपतिंप्रस्थादिपात्रेशनैः संमार्जन्यधिवर्त्तितेयुवतयस्तिस्तः सकन्यानिशिनिर्यातारजकादिवेश्मसुकर्णकत्वातम

प्रश्नलग्नक्षणेयाहशापत्ययुक्स्वेछयाकामिनीतत्रचेदाव्रजेत् कन्यकावासुतोवातदापंडितैस्ताहशापत्यमस्याविनिर्दिश्यते
८ शंखभेरीविपंचीरवैर्मंगलंजायतेवैपरीत्यंतदालक्षयेत् वायसोवाखरःश्वाथगालोपिवाप्रश्नलग्नक्षणेरौतिनादंयदि
९ विश्वस्वातीवैष्णवपूर्वात्रयमैत्रैर्वस्वाग्नेयैर्वाकरपीडोचितऋक्षैः वस्त्रालंकारादिसमेतैःफलपुष्पैःसंतोष्यादौस्यादनुक
न्यावरणंहि १० धरणिदेवोऽथवाकन्यकासोदरः शुभदिनेगीतवाद्यादिभिः संयुतः वरवृत्तिवस्त्रयज्ञोपवीतादिनाध्रुवयुते
॥वह्निपूर्वात्रयेराचरेत् ११
भ्यर्चितंयांवाचंशृणुयुस्तदर्थसदृशीलोकेकिलोपश्रुतिः तन्मंत्रश्च उपश्रुतिमहादेविचांडालगृहवासिनियथा
र्थंब्रूहिदेवित्वंशक्रराज्यप्रवर्धिनीति ९ अथकन्यावरणमुहूर्तमतमयूरछंदसाह विश्वस्वातीति उत्तराषाढादिनक्षत्रैर्यद्वाविवाहनक्षत्रैरुपलक्षिते
कालेवस्त्रालंकारादिशब्देनखाद्यादिमधुरवस्तुभिः सहितैःफलपुष्पैः आरोकन्यांतोष्यतोषयित्वाऽनुपश्चात्कन्यावरणंहिनिश्चयेनस्यात् कन्या
वरयोर्लक्षणानिसामुद्रिकाध्यायादवगंतव्यानि १० अथवरवरणमुहूर्तमाह धरणिदेवइति धरणिदेवोब्राह्मणःपुरोहितादिः चंडेश्वरः पूर्वात्रि
तयमाग्नेयमुत्तरात्रितयंतथा रोहिणीतत्रवरणेभगणाःशस्तास्तेसदा उपवीतंफलंपुष्पंवासांसिविविधानिच देयंवरायवरणेकन्याभ्रात्राद्विजेनवेति ११

अथ व्रतबंधानंतरं सायंकाले बटुना ब्रह्मौदनाख्यः संस्कारोभिहितस्तत्रार्थयाविशेषमाह प्राक् ब्रह्मौदनमिति स्पष्टार्थं उक्तं च नृसिंहप्रसादे ब्रह्मौद
नविधेः पूर्वं प्रदोषे गर्जितं भवेत् तदा विघ्नकरं ज्ञेयं बटोरध्ययनस्य तत् तस्य शांतिप्रकारं तु वक्ष्ये शास्त्रानुसारतः स्वस्तिवाचनपूर्वं तु हवनं का
रयेद्बुधः प्रधानं पायसं साज्यं द्रव्यं शांतिय ज्ञो भवेत् तत्कं बृहस्पतेर्विद्वान्पठेद्विद्यासमृद्धये गायत्रीं युंजत मंत्रः प्रायश्चित्तं तु सर्पिषा धेनुं सवत्स
कां दद्यादाचार्याय पयस्विनीं शिलाहोमविधेः पश्चात्स्नापयेत्तत्र संसदि ब्राह्मणान्भोजयेत्पश्चात्ततो ब्रह्मौदनं चरेदिति ५६ अथ वेदविशेषेण न
क्षत्राणि वसंततिलकयाह वेदेति मृगाश्लेषार्द्राहस्तचित्रास्वातीमूलपूर्वात्रयेषु ऋग्वेदाध्यायीनां रेवतीहस्तानुराधामृगपुष्यरोहिण्युत्तरात्रये
षु यजुर्वेदाध्यायीनां अश्विनीधनिष्ठापुष्यहस्तोत्तरात्रयार्द्राश्रवणेषु सामवेदाध्यायिनां मृगरेवतीपुष्याश्विनीहस्तानुराधाधनिष्ठापुनर्वसुषु अथ

प्राक् ब्रह्मौदनपाकाद्व्रतबंधानंतरं यदि चेत् उत्पातानध्ययनोत्पत्तावपि शांतिपूर्वकं तत्स्यात् ५६ वेदक्रमाच्छशिशिवाहिक
रचित्रमूलपूर्वासु पौष्णकरमैत्रमृगादितिज्ये ध्रौवेषु चाश्विवसुपुष्यकरोत्तरेशकर्णे मृगांत्यलघुमैत्रधनादितौ सत् ५७ नां
दीश्राद्धोत्तरं मातुः पुष्पे लग्नांतरे न हि ॥ ऋग्वेदाध्यायिनां पूर्वश्लोकानुवृत्तत्पदपरामृष्टभेषूपनयनं सत् शुभमित्यर्थः उक्तं च मूले ह
स्त्ये याम्ये सार्पे शैवे स्वातित्रये तथा ऋग्वेदाध्यायिनां कार्यं मेखलाबंधनं बुधैः पुष्ये पुनर्वसौ पौष्णे हस्ते मैत्रेशशाक्रभे ध्रौवेषु च प्रशस्तं स्याद्यजुषां मौ
जिबंधने पुष्यवासवहस्ताश्विशिवकर्णोत्तरात्रयं प्रशस्तं मेखलाबंधे बटूनां सामगायिनां मृगमैत्राश्विनीहस्तारेवत्यादितिवासवं अथर्वपाठि
नां शस्तो भगणो यं व्रतार्पणे ५७ अथान्यं विशेषमनुष्टुभाह नांदीश्राद्धेति नांदीश्राद्धं वृद्धिश्राद्धं तत्कृत्यानंतरं यदि संस्कार्यमातुः पुष्परजोद
र्शने जाते सति लग्नांतरे च न सति तदावश्यकर्तव्यत्वे धर्मशास्त्रोक्तां शांतिं विधाय चौलं यज्ञोपवीतं विवाहश्च कार्यः अन्यथा समीचीनलग्नांतर
सत्वे सति चौलादि न सत् दुष्टफलमित्यर्थः मेधातिथिः चौले च व्रतबंधे च विवाहे यज्ञकर्मणि पत्नी रजस्वला यस्य प्रायस्तस्य न शोभनं ॥

स्मृत्यंतरे प्राप्तमभ्युदयं श्राद्धं पुत्रसंस्कारकर्मणि । पत्नी रजस्वला जाता न तु कुर्यात्तत्पिता तदेति तत्पितेतिनांदीश्राद्धकर्तुरुपलक्षणं अतोज्येष्ठभ्रात्रादि नाकरिष्यमाणनांदीश्राद्धान्याकृतत्पत्नी रजस्वला चेत्तदा नांदीश्राद्धनिषेधान्मंगलंनकार्यमेव संस्कार्यमातरि रजस्वलायां तु सन्निहितलग्नांतरा संभवे शांतिं कृत्वा तदीनीमेव तन्मंगलं कार्यं आरब्धत्वान्नस्मृत्युक्तदोषः अपशकुननिरासार्थं शांतिः कार्या उक्तंच वधूवरान्यतरस्यजननी चेद्र जस्वला संपूर्णे तु बले प्राप्ते कुर्यात्पाणिपीडनमिति बलेग्रहबलेच वाक्यसारे अलाभेसुमुहूर्तस्य रजोदोषेह्युपस्थिते श्रियं संपूज्य विधिवत्ततोमंगल माचरेत् हेमीमाषमितापद्मां श्रीसूक्तविधिनार्चयेत् प्रत्यृचंपायसंहुत्वाभिषिच्य हितमाचरेत् यदा तु कृते पि मंगले मंडपोद्वासनात्प्राक् मातरि रजस्व लायां शांत्यादिकं कार्यमेव मंगलस्यासमाप्तत्वात् यदा तु ज्येष्ठभ्रात्रादिनाकृतनांनांदीश्राद्धात्परं तत्पत्नी रजस्वला चेत्तदानकोपिदोषः अन्योपिविशे

शांत्याचौलंव्रतंपाणिग्रहः कार्योन्यथा न सत् ५८ विचैत्रव्रतमासादौ विभौमास्ते विभूमिजे छुरिकाबंधनं शस्तं नृपाणां प्राग्विवाहतः ५९ केशांतं षोडशे वर्षे चौलोक्तदिवसे शुभं ॥

११ षष्ठत्रैव उपवासेन शुध्यंति नार्यः सद्यो रजस्वलाः एकाकिन्यो विवाह दौ देशभंगेषु वा यदीति ५८ अथ छुरिकाबंधनमुहूर्तमनुष्टुभाह विचैत्रेति चैत्रवर्जितेषूपनयनमासेषु माघफाल्गुनवैशाखज्येष्ठेष्वित्यर्थः आ दिशब्देन व्रतबंधोक्ततिथिनक्षत्रजन्मलग्नादीनां ग्रहणं वाकीदृशे व्रतमासादौ विभौमास्ते भौमास्तरहिते गुरुशुक्रास्तादिसामान्यनिषेधादेवसि द्धं तथा विभूमिजे भौमवाररहिते सूर्यादिवारे नृपाणां क्षत्रियाणां विवाहतः पूर्वं छुरिकायाः अल्पशस्त्रविशेषस्य बंधनं कट्यामिति शेषः तदुक्तंहि तं विवाहात्प्रागित्युक्तेः अवधित्वनिश्चयात्समावर्तनानंतरं कार्यं अन्यथोपनयनानंतरं कार्यमित्येव ब्रूयात् ५९ अथ केशांतसमावर्तनमुहूर्त मनुष्टुभाह केशांतमिति षोडशे वर्षे चौलोक्तदिवसे मुहूर्ते गोदानापरपर्यायं केशांतसंज्ञं कर्म शुभं स्यात् गावः केशादीयंते खंड्यंते यस्मिंस्तद्गोदा नं गोदानं षोडशे वर्षे इत्येतद्ब्राह्मणविषयं क्षत्रियविशोर्द्वाविंशचतुर्विंशचविरोधात् तथा मनुः केशांतं षोडशे वर्षे ब्राह्मणस्य विधीयते ॥

राजन्यवंधोर्द्वाविंशे वैश्यस्य द्व्यधिके ततइति आश्वलायनः प्रथमंस्यान्महानाम्नी द्वितीयंच महाव्रतं तृतीयंस्यादुपनिषद्गोदानाख्यंततः परं अत्र जाता
धिकारगोदानंजन्माद्यब्देतुषोडशेइतिवृत्तिकारवचनात् त्रयोदशेमहानाम्न्यादि भवंति त्रयोदशेमहानाम्नी चतुर्दशेमहाव्रतं पंचदशेउपनिषद्व्रतं
षोडशेगोदानमिति एवंक्षत्रियविशोरपिउक्तगोदानकालात्प्राक् वर्षचतुष्टयक्रमेणमहानाम्न्यादिभवंति व्रतोक्तेति हिनिश्चयेनयज्ञोपवीतोक्तदि
वसेआदिशब्देनवारनक्षत्रतिथिलग्नांशकेषुसमावर्तनकर्मेष्यते अत्रकश्यपेनचैत्रोवर्जितः चैत्रमासविवर्जेषुमाघादिषुच पंचसु एतच्चगोदाना
नंतरंविवाहात्प्राक्कार्यं कुर्यात्समावर्तनंकर्मपश्चाद्गोदानतः पाणिनिपीडनात्प्रागितिवसिष्ठोक्तः क्वचिद्द्वितीयवर्षेतन्निषेधउक्तः वधूप्रवेशंव्रतमो
क्षणंचपुंसांपुनर्दारपरिग्रहंच नाब्देद्वितीयेविदधीतधीमान् वदंतिगर्गात्रिवसिष्ठमुख्याइतिनन्निर्मूलत्वादुपेक्ष्यं परिकरोऽलंकारः उत्सर्गोयत्रादरूपः

व्रतोक्तदिवसादौहिसमावर्तनमिष्यते ६० इतिमुहूर्तचिंतामणौसंस्कारप्रकरणंपंचमंसमाप्तं ५ भार्यात्रिवर्गकरणंशुभशी
लयुक्ताशीलंशुभंभवतिलग्नवशेनतस्याः॥

शेषंस्पष्टं ६० इतिदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्वकृतमुहूर्तचिंतामणिटीकायांप्रमिताक्षराख्यायांसंस्कारप्रकरणंपंचमंसमाप्तं ५ अथविवाह
प्रकरणंव्याख्यायते तत्रानाश्रमीनतिष्ठेत्यादिवचनात्समावर्तनानंतरंसर्वाश्रमाणामुपकारकत्वाद्गृहस्थाश्रमएवमुख्यः सचसुशीलस्त्र्याधीनः शील
सुलग्नाधीनमित्यतोलग्नशुद्धिकथनंवसंततिलकयाप्रतिजानीते भार्येति शुभंभर्त्रादेरनुकूलंशीलंस्वभावोयस्याः सात्रिवर्गस्यधर्मार्थकामरू[illegible]
रणमतिशयेनसाधनं तस्याःसुलग्नवशेनशीलंशुभंभवति यतःसुतशीलधर्माः तन्निघ्नताविवाहाधीनता अधीनोनिघ्नआयत्तइत्यमरोक्तेः [illegible]
प्राप्ताः अतोहीतिनिश्चयेनविवाहसमयःपरिचिंत्यतेविचार्यतइति ननुजन्मकालीनग्रहजनितंशुभाशुभंदुरतिक्रममितिविवाहलग्न[illegible]ति
चेन्न ज्योतिषस्मृत्यावेदितशुभसमयारब्धविधिजन्यापूर्वजनितशुभफलेनजन्मांतरीयदुर्दृष्टध्वंसोभवतीत्येवमर्थंतयासार्थक्यात्॥

अतएवसत्याचार्यः शुभक्षणक्रियारंभजनिता पूर्वसंभवाः संपदः सर्वलोकानांज्योतिस्तंत्रप्रयोजनमिति सर्वत्रज्ञेयं १ अथप्रश्नलग्नाद्विवाहयोगद्व
यंस्रग्धरयाह अथशब्दोमंगलार्थः आदौसंपूज्येति आदौगणकं ज्योतिर्विदं रत्नादिभिः मणिवस्त्रफलादिभिः संपूज्य ततः प्रष्टाकन्यायाः उद्वाहे
गणकं वेदयेत् गतिबुद्धेत्यादिनाऽणौकर्तुः कर्मत्वं कीदृशं गणकंसुस्थचित्तं अव्याकुलांतःकरणं स्वस्थेचित्तेबुद्धयः संभवतीत्युक्तः उत्पलः प्रष्टामणि।
कनकयुतैः फलकुसुमैः राशिचक्रमभ्यर्च्य पृच्छेद्यथाभिलषितंभक्त्याविनयान्वितः प्रश्नं दिगिति यदि प्रश्नलग्नात् दशमैकादशतृतीयसप्तमपंचमाना
मन्यतमेस्थानेस्थितश्चंद्रो जीवेनगुरुणादृष्टः सद्यः शीघ्रंपरिणयनकरः स्यात् वा अथवागोतुलेति वृषतुलाककीणामन्यतमप्रश्नलग्नंस्यात्तच्चशुभ

तस्माद्विवाहसमयः परिचिंत्यतेहितन्निघ्नतामुपगताः सुतशीलधर्माः १ आदौसंपूज्यरत्नादिभिरथगणकं वेदयेत्स्वस्थ
चित्तं कन्योद्वाहो दिगीशानलहयविशिखेप्रश्नलग्नाद्यदींदुः दृष्टोजीवेनसद्यः परिणयनकरो गोतुलाकर्कटाख्यंवा स्यात्प्र
श्नस्यलग्नंशुभखचरयुतालोकितंतद्विदध्यात् २ विषमभांशगतौशशिभार्गवौतनुगृहं बलिनौयदिपश्यतः रचयतो
वरलाभमिमौयदायुगलभांशगतौयुवतिप्रदौ ३ षष्ठाष्टस्थः प्रश्नलग्नाद्यदींदुर्लग्नेक्रूरः सप्तमेवाकुजः स्यात् मूर्ताविं
दुः सप्तमेतस्यभौमो रंडासास्यादष्टसंवत्सरेण ४

शुभग्रहैर्युतमवलोकितंवाभवेत्तत्परिणयनंविदध्यात् २ अथान्ययोगद्वयंद्रुतविलं
बितेनाह विषमभांशगताविति स्पष्टार्थं ३ अथप्रश्नलग्नाद्वैधव्ययोगत्रयंशालिन्याह षष्ठाष्टस्थइति चंद्रः प्रश्नलग्नात्षष्ठाष्टमस्थस्तदाक
न्याष्टसंवत्सरेणविवाहवर्षाद्रंडाभर्तृनाशिकास्यात् अथवालग्नेयः कश्चित्क्रूरग्रहः स्यात्ततः सप्तमेकुजोभवेत्तदाष्टवर्षमध्येरंडास्यात् केचित्तु
लग्नेपिपापएवंप्रश्नेनिषेधंति कश्यपः एकोलग्नगतः पापोऽन्यः सप्तमराशिगः आसप्तमाब्दान्मरणंपुरुषस्यनसंशयइति तेषांमतेसप्तमेवाख
लः स्यादितिपाठः अथवामूर्तौलग्नेचंद्रः तस्यसप्तमेभौमोभवेत् तदाऽष्टवर्षेणरंडास्यात् ४॥

र्येगोऽपि जीवः सुखार्थसुखवृद्धिकरो विवाहे नीचेति नीचं मकरः अरिस्थाः मिथुनकन्यातुलावृषराशिस्थः शुभोऽप्यसन् अनिष्टफलदातेत्यर्थः उक्तं
च उच्चस्थः स्वगृहे सुहृद्भवनगो वा चस्यातिर्नित्यशः पूर्णायुर्विविधार्थसौख्यजनको जन्माष्टमस्थोऽपि चेत् नीचस्थोऽरिगृहे दिवाकरकरच्छायानुगामी
सदापीष्टोऽनिष्टफलं ददाति नियतं वैधव्यदुःखास्पदं अत्राष्टमस्थोऽपि चेदित्यपिशब्देन चाष्टमं लक्षगुणं प्रपूजयेदिति विधानात्पूजामनीह माने
प्युपनयनादिशुभं स्यात् द्वादशचतुर्थस्थानस्थस्तु द्विगुणपूजामिच्छतः तथा तृतीयादिस्थानस्य पूजामात्रापेक्षस्य गुरोः शुभफलदातृत्वास्तीति किं
वक्तव्यमिति के श्रुति कन्यायस्त्वचनार्थोऽपिशब्दः न चाष्टमं लक्षगुणं पूजयेदिति यत्तु गृहस्थितगुर्वभिप्रायं अस्यापवादो रत्नकेशे गोचराष्टकव
र्गाभ्यां यस्य शुद्धिर्न लभ्यते तस्योपनयनं कार्यं चैत्रे मीनगते रवौ हरौ सिंहांशगे जीवे नीचर्क्षे नीचभागगे मौंजीबंधः शुभः प्रोक्तश्चैत्रे मीनगते रवौ पाठांतरं
जन्मभाष्टगे सिंहे नीचे वा शत्रुगे गुरौ वितिः अयं चैत्रे मेषगोऽर्कोऽनिषिद्धः तथा चोक्तं सौम्यायने व्रतं कार्यं चैत्रे मासि विशेषतः स्वपोतननिघो यदि

रिःफाष्टतुर्यगोऽपीष्टो नीचारिस्थः शुभोऽप्यसन् ४७ कृष्णे प्रदोषेऽनध्याये शनौ निश्यपराह्णके॥ ६ ॥

फाल्गुने स्यादजस्तु वैशाखमतो न निघः मध्वांश्रितौ द्वावपि वर्जनीयाविन्यादिवाचामपि मे प्रयुक्तिरिति इदं गणेशदैवज्ञैरप्याधायितामिर्मूलमिवप्र
तिभाति मूलवाक्याभावात् ४७ अथ व्रतबंधे वर्ज्याननुष्टुभाह कृष्ण इति एषु व्रतबंधो नेष्टः कृष्णे प्रथमत्रिभागरहिते कृष्णपक्षे प्रदोषे यस्मिन् दिने
संध्याकाले प्रदोषो भवेत्तद्दिवसे प्रदोषलक्षणमग्रे तर्कैर्त्याद्युग्रे वक्ष्यति अनध्याये वक्ष्यमाणे निशीति अंगवंगकलिंगेषु सौराष्ट्रमगधेषु च तीर्थया
त्रां विना गच्छन्पुनः संस्कारमर्हतीति पुनः संस्कारप्राप्तौ निमित्तानंतरमेव नैमित्तिकमिति न्यायेन यदि रात्रिसद्भावस्तदोपनयनं माभूदिति रात्रिपदोक्तिः
तथा प्राक्संध्याप्रातः संध्यांतस्यागर्जितमेघशब्दे वसिष्ठः व्रते हि पूर्वसंध्यायां वारिदो यदि गर्जति तद्दिनं स्यादनध्यायं व्रतं तत्र विवर्जयेदिति अपराह्णे
सोणे चंद्रे ष्ठमे शुक्रे निरंशे चैव भास्करे कर्तव्यं नोपनयनं नानध्याये गलग्रहे एते: प्रथमभागस्थो निरंशः सूर्य उच्यते तथा गलग्रहे गलग्रहानाह

गुरुः त्रयोदश्यादिचत्वारिसप्तम्यादिदिनत्रयं चतुर्थीचैकतः प्रोक्ता अष्टावेतेगलग्रहः दैवज्ञमनोहरे प्रदोषेनिष्पन्नध्यायेमंदेकृष्णेगलग्रहे मधुंवि
नोपनीतस्तुपुनःसंस्कारमर्हति गलग्रहेप्रदोषेचस्वल्पायुरुपजायतेइतिच ४८ अथांशफलमनुष्टुभाह क्रूरोजडइति षट्कर्माणि यजनंयाजनंवे
दनत्यादानप्रतिग्रहो अध्यापनंचाध्ययनंषट्कर्माधर्मभाक्द्विजइति अन्यत्स्पष्टं ४९ अथचंद्रनवांशफलंस्वनवांशेसापवादंतज्जौलगुरुव
दमोटनकमितिलक्षणलक्षितेनमोटनकछंदसाह विद्यानिरतइति यस्मिन्कस्मिन्राशौचंद्रोयदिशुभग्रहराशिनवांशेचेत्तदाव्रतीविद्यानिरतोभवे
त् यदिपापग्रहराशिनवांशेचंद्रस्तदादरिद्रतरः धनरहितः यदिस्वलवेकर्कांशेस्यात्तदाबहुदुःखसहितोभवेत् अथस्वांशगतंचंद्रस्यापवादमाह क

प्राक्संध्यागर्जितेनेष्टोव्रतबंधोगलग्रहे ४८ क्रूरेजडोभवेत्पापः पटुःषट्कर्मकृत् बटुः यथार्थभाक्तयामूर्खोरव्याद्यंशे
तनौक्रमात् ४९ विद्यानिरतःशुभराशिलवेपापांशलवेहिदरिद्रतरः चंद्रेस्वलवेबहुदुःखयुतःकर्णादितिमेधनवान्स्व
लवे ५० राजसेवीवैश्यवृत्तिःशस्त्रवृत्तिश्चपाठकः प्राज्ञोर्थवान्म्लेच्छसेवीकेंद्रेसूर्यादिखेचरैः ५१ शुक्रेजीवेतथाचंद्रेसू
र्येभौमार्किसंयुते॥ ऽऽर्णेति कर्णोश्रवणोऽदितौपुनर्वसौनक्षत्रेउपनयनेस्वांशेचंद्रःस्यात्तदाधनवान्भवेत् नारदः श्रवणादितिनक्षत्रेकर्कांश

स्थेनिशाकरे तदाव्रतीवेदशास्त्रधनधान्यसमृद्धिमान् ५० केंद्रस्थानांफलमनुष्टुभाह राजसेवीति केंद्रेसूर्यादिखेचरैःप्रत्येकंसहितेक्रमादिदंफ
लंज्ञेयं अन्यत्स्पष्टं अत्रलग्नस्थेचंद्रेकेंद्रस्थेशनिचविनासर्वेग्रहाःशुभाइत्यवगम्यते मुनिभिस्तुकेंद्रेपापानिषिद्धाइत्युक्तं नारदः स्फूर्जितंकेंद्रगे
भानौव्रतिनोवंशनाशनं कुजितंकेंद्रगेभौमेशिष्याचार्यविनाशनं अत्रस्वगृहोच्चाद्यवस्थिताःपापाःकेंद्रस्थाःशुभफलदातारः अन्यथानेतिविरु
द्धार्थवचनयोर्विषयविवेकः ५१ अथान्यदाह शुक्रेति शुक्रेजीवेचंद्रेप्रत्येकंसूर्येसंयुते व्रतीनिर्गुणःस्यात् भौमसंयुतेक्रूरचेष्टः क्रूरोहिंसनशीलः

तथाश्विनिसंयुते निर्घृणो निर्लज्जो निर्दयो वा स्यात् तथा तस्मिन्नेव जीवे शुक्रे चंद्रे वा प्रत्येकं सद्भिर्युते पटुः सर्वविद्यानिपुणः स्यात् ५२ अथान्यत्प्रमाणिक
याह विधोसितांशगेति चंद्रे शुक्रांशगे शुक्रे त्रिकोणगे गुरौ तनौ लग्ने च सति व्रतीवटुः समस्तांश्चतुरो वेदान्वेत्तीति समस्तवेदवित् एवं यमांशगे शनिन
वांशसंस्थिते चंद्रे सति लग्ने गुरौ च सति सिते त्रिकोणगे सति अपि निर्घृणः स्यात् महेश्वरः जीवे लग्नमधिष्ठिते भृगुसुते धर्मात्मजस्थे विधौ शुक्रांशे स्थि
लवेदविद्व्रतिसुतस्याशुक्रतघ्नो धर्म इति नारदः लग्नं सर्वगुणोपेतं लभ्यते त्वेदिने नैसत् दोषाल्पत्वं गुणाधिक्यं बहुसंमतमिष्यते दोषदुष्टो हि कालो
यः सोयमाहुर्नैशक्यते दोषावेधाद्यो महादोषइत्यर्थः ५३ अथानध्यायान् जवनचपलार्थे याह शुचिशुक्रेति अनध्यायाः आषाढशुक्लदशमी
ज्येष्ठशुक्लद्वितीया पौषशुक्लैकादशी माघशुद्धद्वादशी एता अनध्यायाः भूतश्चतुर्दशी नदादिनित्यं चतुर्दशी पूर्णिमाप्रतिपदः कृष्णपक्षे अमावास्या

निर्गुणः क्रूरचेष्टः स्यान्निर्घृणः सद्युतेपटुः ५२ विधोसितांशगे सिते त्रिकोणगे तनौ गुरौ समस्तवेदवित् द्वितीयमांशगेति निर्घृ
णः ५३ शुचिशुक्रपौषतपस्यादिगष्विरुद्रार्कसंख्यसिततिथयः॥ ११

तन्मध्ये अष्टमी च तयोः समाहारः तथा संक्रमणं सूर्यसंनिरय
नं संक्रांतिदिनं चकारान्मन्वाद्यास्तिथीर्मधाविन्यादिनोक्ताः तत्राषाढशुक्लदशमी पौषशुद्धैकादशी च मन्वादी ज्येष्ठशुक्लद्वितीया माघशुद्धद्वाद
शी च सोपपदे यद्यपि चैत्रशुद्धतृतीया मन्वादिः वैशाखशुद्धतृतीया युगादिस्तथापि ते उभे तृतीये नानध्यायौ तथैव फाल्गुनकृष्णद्वितीया चातुर्मास्यद्वि
तीयापि नानध्यायः तासां प्राशस्त्याभिधानात् तथा च वसिष्ठः यावैत्रवैशाखसितान्तृतीयामाघस्य सप्तम्यथ फाल्गुनस्य कृष्णे द्वितीयोपनये प्रशस्ता
प्रोक्ता भरद्वाजवसिष्ठमुख्यैरिति अन्यासां युगादिमन्वादीनां व्रतबंधे अप्रसंगादेव अग्रहणं केचिदाचार्याः यावैत्रवैशाखेति वचनं लिखित्वापि
स्वेच्छया नांगीकुर्वंति तत्र शपथमात्रमेव प्रमाणं न पश्याम इत्यलं तन्मते तृतीये अनध्यायत्वेन ज्ञेये व्रतोपेतिपदमावश्यकत्वद्योतनार्थं गौतमः प
क्षद्वये चतुर्दश्यामष्टमी द्वितये तथा पक्षांतावपि पक्षांते ब्रह्मनाधीयते नरैः फलं च अष्टमी हंत्युपाध्यायं शिष्यं॥ ६ ॥ ॥

मु॰टी॰
सं॰प्र॰
६०

हंति चतुर्दशी अमावास्योभयं हंति प्रतिपत्पाठनाशिनी मनुः चातुर्मास्यद्वितीयासु मन्वादिषु युगादिषु अष्टकासु च संक्रांतौ शयने बोधने हरेः अनध्या
यं प्रकुर्वीत तथा सोपपदासु चेति चातुर्मास्यद्वितीया गर्गेणोक्ताः आषाढफाल्गुनोर्जेषु या द्वितीया विधुक्षये चातुर्मास्यद्वितीयास्ताः प्रवदंति महर्षयः
मन्वादयो युगाद्यश्च पूर्वमुक्ताः सिता ज्येष्ठे द्वितीया च आश्विने दशमी सिता चतुर्थी द्वादशी माघे एताः सोपपदाः स्मृताः नैमित्तिकास्त्वनध्यायास्तु स्मृत्यर्थ
सारे निर्घातभूकंपोल्कानिपतनादि सर्वाद्भुतेष्वाकालिकोऽनध्यायाः अग्न्युत्पाते वाऽकालवृष्टौ वा आर्द्रादिज्येष्ठांतात्कालादन्यत्राकालवृष्टिः सायंसं
ध्यागर्जने उदयांतोऽनध्यायः अर्धरात्रादूर्ध्वं गर्जने अर्धरात्रे वा आकालिकोऽनध्यायः प्रातःसंध्यागर्जने त्वहोरात्रमिति कालं मर्यादीकृत्येत्याकाल
आकाले भव आकालिकः यस्मिन्काले निमित्तमुत्पन्नं तदारभ्य द्वितीयदिने तत्कालपर्यंतमित्यर्थः स्मृतिरत्नावल्यां अनूराधर्क्षमारभ्य षोडश
र्क्षेषु भास्करः यावच्चरति तावत्तावदकालं मुनयो विदुरिति कालवृष्टौ तु तत्कालमकाले तु त्रिरात्रकं अतिमात्रा यदा वृष्टिर्नाधीयीत दिनत्रयं आप

भूतादित्रितयाष्टमीसंक्रमणं च व्रते त्वनध्यायाः ५४ अर्कतर्केनितिथिषु प्रदोषः स्यात्तदग्रिमैः रात्र्यर्धसार्धप्रहरयाममध्ये स्थितैः क्रमात् ५५

लंबः उल्कायामग्न्युत्पाते च सर्वासां विद्यानामाकालिकमिति मनुः चौरैरुपप्लुते ग्रामे संभ्रमे चाग्निकारिते आकालिकमनध्यायं विद्या
त्सर्वाद्भुतेषु चेति अद्भुतेषु रुधिरादिवृष्टिषु वसिष्ठः उपलरुधिरसंपाते त्र्यहमिति स्मृत्यंतरे विद्युद्गर्जितवृष्टीनां संनिपातो यदा भवेत् कालवृष्टौ तु तत्कालमका
ले तु त्रिरात्रकमित्यादिका नैमित्तिकास्त्वनध्यायाः यदा मेखलाबंधात् प्रागुत्पन्नास्तदा व्रतबंधो न कार्य एव यदा तु मेखलाबंधादनंतरं ब्रह्मौदनपाकात् प्रागु
त्पन्नास्तदा जातेऽपि न प्रवर्तंते ५४ अथ प्रदोषलक्षणमनुष्टुभाह अर्केति तदग्रिमैरर्कादितिथिषु प्रदोषः स्यात् यथा द्वादश्यामर्धरात्रात्प्राक् त्रयोदशी
प्रवृत्तौ प्रदोषः षष्ठ्यां सार्धप्रहरमध्ये सप्तमीप्रवृत्तिस्तदा प्रदोषः तथा तृतीयायां प्रहरमध्ये चतुर्थीप्रवेशे प्रदोषः अत्र द्वितीयप्रहरस्य चरमघटिकाद्वि
तीयप्रहरस्याद्या वा घटिकेत्येवं घटिकाद्वयमितः कालः स्थूलो रात्र्यर्धशब्दो वाच्यः तेन समांशवाचित्वाभावादर्धं नपुंसकमिति एकदेशिसमासभावः ५५

एम:
६०

अथव्रतबंधे नक्षत्रादिकं वसंततिलकेनाह क्षिप्रेति गीर्वाणांबुप्रतिष्ठेत्यादिना दक्षिणायननिषेधादुत्तरायणमासषट्कं प्रशस्तमिति मासानामुक्त
त्वान्नक्षत्रादिकमेवोक्तं तत्र काश्यपः अतोवसंते विप्राणां ग्रीष्मे राज्ञां शरद्यथा विशां मुख्यं च सर्वेषां द्विजानां चोपनायनं साधारणं च मासेषु माघा
दिषु च पंचसु क्षिप्रेति क्षिप्राणि हस्ताश्विपुष्याः ध्रुवाणि रोहिण्युत्तरात्रयं अहिराश्लेषा चराणि श्रवणधनिष्ठाशततारापुनर्वसुस्वात्यः मूलं मृदूनि
मृगरेवतीचित्रानुराधाः तिस्रः पूर्वा रौद्रमार्द्रा एषु द्वाविंशतिभेषु व्रतबंधनं सत् उक्तं च प्राजापत्यादिषड्भे भगभाद्दिषु पंचसु मूलादिदशके चै
वसमैत्रे व्रतबंधनमिति अथोद्धरणीकृत्तिकामघाविशाखाज्येष्ठासु न कार्यमित्यर्थः एतानि सर्वशाखानक्षत्रमेलकाभिप्रायेणोक्तानि क्वचिज्ज्येष्ठा
शततारापि गृहीता श्रीपतिनिबंधे अश्विनीमृगचित्रासु हस्ते स्वात्यां च शाक्रभे पुष्ये च पूर्वफल्गुन्यां श्रवणे पौष्णभे तथा वासवे शततारासु व्रतबं
धः प्रशस्यते भुजबलराजमार्तंडयोरपि हस्तत्रये दैत्यरिपुत्रये च शाक्रेंदुपुष्याश्विनिरेवतीष्विति हस्तेशाक्राश्विचित्रादितिवसुवरुणापेंद्रपुष्ये

क्षिप्रध्रुवाहिचरमूलमृदुत्रिपूर्वारौद्रेऽर्कविद्गुरुसितेंदुदिने व्रतंसत् द्वित्रीषुरुद्ररविदिक्प्रमितेतिथौचकृष्णादिमत्रिलवके
ऽपि न चापराह्णे ४०

दुयोः स्वातीष्वव्याहतासु स्फुटमुपनयनं भार्गवाद्यैर्मुनींद्रैरितिच अर्केति सूर्यबुधगुरुशुक्रचंद्रदिवसेषु व्रतं सत् अ
योर्द्वौ मशनीनिषिद्धौ नारदः आचार्यसौम्यकाव्यानां वाराः शस्ताः शशीनयोः वारौ तौ मध्यफलदावितरौ निंदितौ व्रते तत्राप्यस्तंगते बुधस्य वारो वर्ज्यः
अस्तंगतस्य सौम्यस्य वारो वर्ज्यो द्विजन्मनामिति नारदोक्तेः द्वित्रीषिति द्वितीयातृतीयापंचम्येकादशीद्वादशीदशमीसंज्ञासु तिथिषु च व्रतं सत्स्यात् नार
देन सप्तमीत्रयोदश्याः प्राशस्त्यमुक्तं तद्वसंताभिप्रायेण ज्ञेयं उक्तं च तेनैव विनर्तुना वसंतेन कृष्णपक्षे गलग्रहे अपराह्णे चोपनीतः पुनः संस्कार
महतीति कृष्णादिमिति विहितमासानां कृष्णपक्षस्यादिमत्रिलवके पंचमीपर्यंतं व्रतं सत् त्यक्त्वा चतुर्थीमपि कृष्णपक्षे त्वाद्यंत्रिभागेषु भद्रं व्रतेस
दितिवसिष्ठोक्तेः नचेति त्रिधाविभक्तदिनस्य त्रयो विभागाः क्रमेण पूर्वाह्णमध्याह्नापराह्णाः संज्ञका भवंति तत्रापराह्णभागे व्रतं न सत् अपराह्णे
चोपनीतः पुनः संस्कारमर्हतीति नारदोक्तेः त्रिधाविभज्य दिवसं तत्रादौ कर्म दैविकं द्वितीये मानुषं कार्यं तृतीयं शेतु पैतृकमिति नारदोक्तेः ४० ॥

अथव्रतबंधेसामान्यतोलग्नभंगयोगंप्रमाणिकयाह कवीज्येति अतौषष्ठेमृतावष्टमस्थानेचेच्छुक्रगुरुचंद्रलग्नस्वामिनोभवंतितदाअधमाः
मरणकारकाः अजुभार्गवौचंद्रश्शुक्रोव्ययेअधमौ खलाः पापग्रहाः लग्नाष्टमपंचमस्थानेषुस्थिताः अधमाः ४१ अथसामान्यतोलग्नशु
नुष्टमाह व्रतबंधइति शुभग्रहाः अष्टमषष्ठद्वादशस्थानस्थिताश्चेन्नशुर्नशोभनाः अन्यस्थानेव्रतबंधेशोभनाः खलाः पापाः तृतीयषष्ठै
कादशस्थानेषुशोभनाःस्युः गोकर्कौति पूर्णःशुक्लपक्षीयोविधुः वृषभस्थःकर्कस्थश्चतनौयदिभवेत् तदासत् शोभनः नान्यथा गुरुः चंद्रे
लग्नेमिशस्तःस्यात्स्यरोगीसितेतरेशुक्लपक्षेभवेद्यज्जातस्तुगेविशेषतइति वश्यपत्स्चस्थचंद्रसदाएवन्यथैधत् वर्धमानोपिवापूर्णश्च
द्रोयदिविलग्नगः निःस्वंकरोतिव्रतिनंलग्नगः क्षयरोगिणमिति उच्चस्थसंबंधिनोःपक्षयोर्देशाचारतोव्यवस्था स्वगृहगस्तुउत्तममतद्वये ४२

कवीज्यचंद्रलग्नपारिपौमृतौव्रतेधमाः व्ययेजभार्गवौतथातनौमृतौसुतेखलाः ४१ व्रतबंधेष्टषट्रिःफवर्जिताः शोभनाः
शुभाः त्रिषडायेखलाःपूर्णोगोकर्कस्थोविधुस्तनौ ४२ विप्राधीशौभार्गवेज्यौकुजार्कौराजन्यानामोषधीशोविशांच
शूद्राणांज्ञश्चांत्यजानांशनिःस्याच्छाखेशाःस्युर्जीवशुक्रारसौम्याः ४३ शाखेशवारतनुवीर्यमतीवशस्तंशाखेशसूर्यश
शिजीवबलेव्रतंसत् ॥ ॥ ४४ अथवर्णेशशाखेशान्शालिन्याह विप्राधीशाविति शुक्रबृहस्पतीब्राह्मणाधीशौभौमसूर्यौक्षत्रियाणां
स्वामिनौ ओषधीशश्चंद्रोवैश्यानांस्वामी बुधःशूद्राणांस्वामी शनिरंत्यजानांचांडालानांस्वामी ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वण
इतिवेदक्रमाज्जीवशुक्रारसौम्याःशाखेशाःस्युः ऋग्वेदस्यगुरुः यजुषःशुक्रः साम्नोभौमः अथर्वणोबुधःस्वामी ४३ वर्णेशशाखेशयोः
प्रयोजनंवसंततिलकेनाह शाखेशेति यः स्वशाखाधिपस्तस्यवारस्तनुर्लग्नंच वीर्यंबलंगोचरप्रकारेणस्वगृहाद्यवस्थितत्वेनवाबलवत्वं
चव्रतबंधेऽतीवशस्तं यथागुरुः ऋग्वेदिनामीशोऽतोगुरुवारेगुरुलग्नेधनुर्मीनाख्येगुरुबलेचसतिउपनयनम् ॥

नीचस्थं एवंसर्वत्रज्ञेयं नारदः शाखाधिपतिवारश्चशाखाधिपबलंशिशोः शाखाधिपतिलग्नचन्द्रितयंदुर्लभंव्रते शाखेति शाखावेदस्तस्ये
शः स्वोक्तेः जीवेइति जीवेभृगौचकाराच्छाखेशेवर्णेशेवाविजितेसुहृत्परा जितेनीचराशिस्थेचसतिव्रतेनानुष्ठितेनसतांवेदशास्त्रविधिनावेदाध्यय
नविधिर्नित्यनैमित्तिकश्रौतस्मार्तकर्मानुष्ठानाख्यस्तेषांसमाहारद्वंद्वस्तेनरहितोव्रतीस्यात् वसिष्ठः शाखेशगुरुशुक्राणांमौढ्येवाल्येचवार्धके नैवो
पनयनंकार्यंवर्णेशेदुर्बलेसतीति तेनभौमबुधयोरस्तेसामगाथर्वणशाखिनोरुपनयनादिनभवतीतिनत्व तत्रनीचाद्यवस्थितत्वेपिशाखेशः परि
हारमाहवसिष्ठः शत्रुनीचाधिगंतुल्ये लाशेवालोच्चभागगे शाखेशेवागुरौशुक्रेननीचफलमश्नुतइति शुक्रस्यशत्रुराशिस्थत्वंवृषभस्थेर्केकदा
चित्संभवति नीचगतंशरदिवैश्यमुपनयेदितिवैश्योपनयनंसंभवतीतिध्येयं ४४ अथजन्ममासादेः प्रतिप्रसवमाहजन्मर्क्षेति जन्मनक्षत्रेज

जीवेभृगौरिपुगृहेविजितेचनीचेस्याद्वेदशास्त्रविधिनारहितोव्रतेन ४४ जन्मर्क्षमासलग्नादौव्रतेविद्याधिकोव्रती आ
द्यगर्भेपिविप्राणांक्षत्रादीनामनादिमे ४५॥

न्ममासेजन्मलग्नेआदिशब्देनजन्मतिथौविप्राणांब्राह्मणानांआद्यगर्भेपि आपिशब्दा
त्द्वितीयगर्भादावपिव्रतीबालोव्रतेयज्ञोपवीतेविद्याधिकः स्यात् क्षत्रादीनांक्षत्रियवैश्यानांपुनरनादिमेद्वितीयगर्भादिबालकेसतिजन्मर्क्षमा
सलग्नादौविद्याधिकोव्रतीस्यात् आद्यगर्भेतुतेषांसर्वथानिषेधएव शौनकः जन्मोदयेजन्मसुतारकासुमासेतथाजन्मतिथौचराशौ व्रतेना
विप्रोत्यपरिश्रुतोपिप्राज्ञोविशेषः प्रथितः पृथिव्यां गर्भाष्टमेगर्गपराशराद्यैः फलंयदुक्तंव्रतबंधनेतु ततोधिकंजन्मसुतारकासुमासेथवा
जन्मनिवाडवानां विप्रभूदेववाडवाइत्यभिधानात् प्रथमदशमैकोनविंशनक्षत्राणांग्रहणार्थंजन्मसुतारकास्वित्युक्तं जन्ममासनिषेधस्तु आ
द्यगर्भेविषयः क्षत्रियवैश्ययोः विप्राणांतुवाडवानामितिविशेषोक्तेराद्यगर्भानाद्यगर्भसाधारणजन्ममासेउपनयनं जन्ममासादौशस्तमितिज्ञेयं ४५

अथगुरुबलमनुष्टुभाह बटुकन्येति बटुरुपनयनाधिकारीतथाकन्यास्त्रीजात्यपतजन्मराशेनेवपंचमैकादशद्वितीयसप्तमस्थानस्थितोगुरुःश्रे
ष्ठउत्तमःदशषट्तृतीयप्रथमस्थानस्थितोगुरुःपूजयापूजाविधानेनानुष्ठितेनश्रेष्ठः अन्यत्रचतुर्थाष्टमद्वादशस्थानस्थोनिंद्योनिषिद्धइत्यर्थः
नारदः बालस्यबलहीनोपिशांत्याजीवोबलप्रदः यथोक्तवत्सरेकार्यमनुक्तेनोपनायने वसिष्ठः उक्तेपिवर्षेनगुरुर्बलीचेत्शांत्याप्रशस्तंव्रतबंधक
र्म अनुक्तवर्षेसुबलप्रदोपिनैवैतयोरब्दबलंगरीयइति गर्गः व्रतबंधेविवाहेचप्रतिष्ठायांविशेषतः गोचरेणैवकर्तव्यंवेधादिकर्मकारणमिति
वेधस्तु व्ययेपक्षेःत्रिगेशैलेः खगेनंदेः सुखेशरैः रंध्रेरुद्रैः ग्रहैर्विद्धोगुरुःशुद्धोऽशुभोन्यथा प्राच्यास्तुगोचरबलाभावेअष्टकवर्गबलमाहुःराज
मार्तंडः अष्टवर्गविशुद्धेषुगुरुशीतांशुभानुषु व्रतोद्वाहौतुकर्तव्यौगोचरेणकदाचनेति अन्यच्च अष्टकवर्गेणयेशुद्धास्तेशुद्धाःसर्वकर्मसुसूक्ष्मा
ष्टवर्गसंशुद्धिः स्थूलाशुद्धिस्तुगोचरे तत्रगुरोरष्टवर्गोष्टहज्जातके दिक्स्वायाष्टमदायबंधुषुकुजात्स्वात्त्रिकेषंगिराः सूर्यात्त्रिनवेषुधीस्वनव

बटुकन्याजन्मराशेस्त्रिकोणायद्विसप्तगः श्रेष्ठोगुरुःखषट्त्र्याद्येपूजयान्यत्रनिंदितः ४६ स्वोच्चेस्वभेस्वमैत्रेवास्वांशेवर्गो
त्तमेगुरुः॥

दिग्लाभारिगोभार्गवात् जायायार्यनवात्मजेषुहिमगोर्मंदात्त्रिषट्द्वीव्ययेदिग्धीषट्स्वसुखायपूर्वंनवगोज्ञात्स्मरेषूदयात्
वराहः पूजाभिलाषंप्रतिनिस्पृहेपिकुर्याद्गुरोःशुद्धिविवर्जितेपि वरस्यलाभेशुभदंविवाहंवदंतिगर्गच्यवनादिमुख्यः अत्रचतुर्थाष्टमद्वादशस्था
नस्थितत्वेनगुरोर्द्विगुणत्रिगुणादिकांपूजांविधायविवाहव्रतबंधादिशुभमितिसंप्रदायविदः ४६ अथगुरुदोषापवादमनुष्टुभाहस्वोच्चइति
गुरुश्चतुर्थादिनिंद्यस्थानस्थितोपिस्वोच्चेकर्के स्वभेधनुर्मीने स्वमैत्रेमेषसिंहवृश्चिके स्वांशेधनुर्मीननवांशे वर्गोत्तमेनवांशेयथा वृषराशौ
वृषनवांशेगुरुर्वर्गोत्तमइतिवर्गोत्तमलक्षणं वर्गोत्तमानवांशाश्चरादिषुप्रथममध्यांताइति एवंस्थितोगुरुःइष्टशुभफलदाता अन्येत्वेतादृशो
गुरुः अतीवशुभः भुजबलः वर्गोत्तमेस्वभवनेभवनेथमैत्रेमित्रांशकेस्वभवनोच्चनवांशकेवा जन्माश्रितः फरिषुखत्रिचतु॥

रजस्वलायाः तथाहृतिकायाजातापत्यायाश्चहृतौ चौलोपनयनविवाहादिकृत्यंबालस्यबालिकीश्चवानाचरेत् नकुर्यात् उक्तंचप्रचेतसा यस्यमां
गलिकंकृत्यंतस्यमातारजस्वला तदासम्प्रनुमाप्नोतिपंचमंदिवसंविनेति विवाहोत्सवकार्येषुमाताचैवरजस्वला वैधव्यंजायतेतत्रनृनार्याः पा
णिपीडनेइति ज्येष्ठापत्यस्याद्यगर्भेसुतस्यकन्यायावाशुभकृत्यंचौलादिकंज्येष्ठेमासिनभवति कैश्चिदिति मार्गशीर्षेपिकैश्चिदाचार्यैराद्यगर्भेसु
तकन्ययोर्मंगलकृत्येनेष्यते भरद्वाजः मार्गशीर्षेतथाज्येष्ठेक्षौरंपरिणयंव्रतं आद्यगर्भेदुहितुश्चयत्नेनपरिवर्जयेदिति ३३ अथसामान्यतः
क्षौरमुहूर्तेतन्निषिद्धकालंचशार्दूलविक्रीडितेनाह दंतक्षौरेति चौलादिनेवारनक्षत्रेदंतक्रियाघर्षणादिका क्षौरक्रियाविहिताउक्ता निषिद्ध
कालमाह पातंगीति पतंगस्यसूर्यस्यापत्यंपातंगिः शनिः शनिं मरविवारान्मत्का नवमंघस्रंयद्दिनेक्षौरंकृतंततोनवमदिनेपुनःक्षौरंनका

ज्येष्ठापत्यस्यनज्येष्ठेकैश्चिन्मार्गेपिनेष्यते ३३ दंतक्षौरनखक्रियात्रविहिताचौलोदितेवारभेपातंग्यारवीन्विहायनव
मंघस्रंचसंध्यांतथा रिक्तांपर्वनिशांनिरासनरणग्रामप्रयाणोद्यतस्नाताभ्यक्तकृताशनैर्नहिपुनःकार्याहितप्रेप्सुभिः॥
३४ ऋतुपाणिपीडमृतिबंधमोक्षणेक्षुरकर्मचद्विजनृपाज्ञयाचरेत्॥ ॥ टी० तथासंध्यांप्रातःसायंकालौविहाय तथारिक्तां पर्वाणि

पूर्वोक्तानि निशांरात्रिंचविहाय अथाधिकारिणः हितप्रेप्सुभिः स्वशुभमिच्छुभिः एतादृशैर्हिनिश्चयेन क्षौरक्रियानकार्या कैर्निरासनैः आस
नरहितैः रणःसंग्रामः ग्रामप्रयाणमर्थेयात्राएतदर्थेमुद्यतः कृतोद्योगैः स्नातः कृतस्नानैः अभ्यक्तैः कृततैलाभ्यंगैः कृताशनैःकृतभोजनैः
सुवर्णाद्यलंकारभूषितैरित्यपिध्येयं ३४ अथमंजुभाषिण्याविशेषमाह ऋतुपाणिपीडेति ऋतौयत्ने तथापाणिपीडेविवाहस्तत्रश्मश्रुकर्मा
दौ मृतौमातापित्रोर्मरणे बंधमोक्षणेकारागृहेबंधस्यमोक्षणे द्विजाज्ञयाब्राह्मणाज्ञया बंधमोक्षणेराजाज्ञया दुष्टेपिवारनक्षत्रादौक्षौरंचरे
त् कुर्यात् अन्यच्च गंगायांभास्करक्षेत्रेमातापित्रोर्मृतेहनि आधानेसोमपानेचषट्सुक्षौरंविधीयते अन्यच्च॥ ॥

राजकार्यनियुक्तानां नटानां रूपजीविनां श्मश्रुरोमनखच्छेदे नास्ति कालविशोधनमिति अथ शवेति गर्भिणी गर्भवती तस्याः भर्त्ता शववाहे मृत
कवहनं तीर्थगमं तीर्थयात्रां उपलक्षणत्वाद्विदेशगमनमपि सिंधुमज्जनं समुद्रस्नानं क्षौरं एतानि कर्माणि नाचरेत् न कुर्यात् उक्तं च सिंधुस्ना
नं द्रुमच्छेदं वपनं प्रेतवाहनं विदेशगमनं चैव न कुर्याद्गर्भिणीपतिः राजा योगी पुरंध्री च मातापित्रोस्तु जीवतोः मुंडनं सर्वतीर्थेषु न कुर्याद्गर्भिणी
पतिः नारदः वपनं मैथुनं तीर्थं वर्जयेद्गर्भिणीपतिः श्राद्धं च सप्तमान्मासादूर्ध्वं चान्यत्र वेदवित् ३५ अथ राज्ञां क्षौरे विशेषं सर्वथा वर्ज्यनक्षत्रा
णि च भुजंगप्रयातेनाह नृपाणामिति नृपाणां पंचमे पंचमे दिने क्षौरनक्षत्रे श्मश्रुकर्म हितं स्यात् पंचमे दिने यदि क्षौरनक्षत्राभावस्तदर्थमाह
अस्योदये वेति अथवाऽस्य क्षौरभस्य उदये श्मश्रुकर्म कार्यं उदयशब्देन तन्नक्षत्रस्य स्वामिनो मुहूर्तः तथा च गर्गः क्षौरकर्म महीशानां पंचमे पं

शववाहतीर्थगमसिंधुमज्जनक्षुरमाचरेन्न खलु गर्भिणीपतिः ३५ नृपाणां हितं क्षौरभे श्मश्रुकर्म दिने पंचमे पंचमे स्योद
ऽऽये वा॥

चमेहनि कर्त्तव्यं क्षौरनक्षत्रेऽप्यथवा तन्मुहूर्त्तके इति उत्पलेन तु वराहपद्यव्याख्यानावसरे अस्य उदये अस्य क्षौरभस्य उदये लग्ने
इति व्याख्यातं यथा मेषलग्नं त्रिंशत्भागात्मकं तत्राद्यास्त्रयोदशभागा विंशतिकलाधिका यावता कालेन मेषलग्ने उदयं यांति तावदश्विनी
नक्षत्रमुदयं यातीति तदनंतरं यावत् एतावांशा यावता कालेनोदयं यांति तावद्भरण्युदय इत्यनेन न्यायेन सर्वेषां नक्षत्राणामुदया ज्ञेयाः आ
तरस्तु एवं व्याकुर्यात् यस्मिन्काले अश्विन्या उदयं क्षितिजसंबंधः संपद्यते तत्समयमारभ्य यावद्भरण्या उदयक्षितिजसंबंधः तदंतरे या
वान्कालः सोऽश्विन्या उदय उच्यते एवं सत्युदयलग्नद्वयांशांतरालात् गणितमार्गेण यावानिष्टकालस्त्वागच्छेत् स एव तन्नक्षत्रोदय इति निष्कृ
ष्टोर्थः षडग्निरिति अग्निः कृत्तिका क्षौरे कृत्यावषड्वारं कृत्तिकायस्य सः एवं त्रीणि मैत्रः अनूराधा यस्य अष्टौकः रोहिण्यो यस्य पंचपित्र्या

णउत्तरा फाल्गुनीय स्मस एतानदग्रक्षौरकृदब्दतो वर्षानंतरं मृत्युं मरणमेति प्राप्नोति वसिष्ठः अष्टाजर्क्षैः पितृपंचकश्चपड्वह्निधिष्ण्याश्चतुर्थमर्क्षैः त्रिमैत्रभः पञ्चजः संनिभोपि क्षौरी नरोब्दान्निधनं गतः स्यादिति क्षौरं ३६ अथ प्राप्तकालत्वादक्षरारंभमुहूर्तं प्रपंचामरछंदसाह गणेशेति गणेश विष्णू प्रसिद्धौ वाक् सरस्वती रमा लक्ष्मीः एता देवताः प्रपूज्य पंचमे वर्षे सति शिवए कादशी द्वादशी दशमी द्वितीया षष्ठी पंचमी तृतीया आसामन्यतमतिथौ रवावुदक् उत्तरायणगते सति तथा लघुनक्षत्राणि हस्ताश्विपुष्यः श्रवणस्वातीरेवतीपुनर्वसुः ईश आर्द्रा तक्ष चित्रा मित्रमनूराधा एषामन्यतमनक्षत्रे सति तथा सतां सोमसुतगुरुशुक्राणां दिने दिवसे तथा चरराशयो मेषकर्कतुलामकरा लग्न

षडग्नि त्रिमैत्रोऽष्टकः पंचापि त्र्योऽब्दतो ध्रुवं यमाक्षौरकृन्मृत्युमेति ३६ गणेशविष्णुवाग्रमाः प्रपूज्य पंचमाब्दके तिथौ शिवार्कदिक्द्विषट्शरत्रिकेरवावुदक् लघुश्रवोनिलांत्यभादितीशतक्षमित्रभे चरोनसत्तनौ शिशोर्लिपिग्रहः सतां दिने॥

३७ मृगात्कराच्छ्रुतेस्त्रयेश्विमूलपूर्विकात्रये गुरुद्वयेर्कजीववित्सितेह्निषट्शरत्रिके शिवार्कदिक्द्विके तिथौ ध्रुवांत्य मित्रभेपरैः शुभैरधीतिरुत्तमा त्रिकोणकेंद्रगैः स्मृता ३८॥ स्थित शुभस्वामिके वृषमिथुनकन्याधनुर्मीनानामन्यतमे लग्ने सति शिशोर्लिपिग्रहो नूतनाक्षरलिखनारंभः कार्यः ३७ अथ विद्यारंभमुहूर्तं प्रपंचामरेणाह मृगादिति मृगात्त्रये मृगार्द्रापुनर्वसुषु हस्तात्त्रये हस्तचित्रास्वातीषु श्रुतेः श्रवणात्त्रये श्रवणधनिष्ठाशततारेषु अश्विन्यां मूले पूर्वात्रये गुरुद्वये पुष्याश्लेषयोः तथा सूर्यगुरुबुधशुक्राणां दिने त या षष्ठी पंचम्यादिसप्ततिथिषु शुभे केंद्रत्रिकोणगे सद्भिः अधीतिः शुभास्मृता अधीतिरध्ययनं परैः ध्रुवांत्यमित्रभे अधीतिः शुभाः प्रोक्ता इदं वचनं विद्याविषयमिति दीपिकोक्तेः विद्यारंभे श्रवणत्रयोपादानं महेश्वरादिमतात् वसिष्ठादिभिः श्रवणस्य केवलस्यानोक्तत्वात् इति विद्या

॥१८॥

अथव्रतबंधइति विंशतिपद्यैः प्रोच्यते इति शेषः तस्य त्रिविधोपि कालो नित्यः काम्यो गौणश्च क्रमेण तत्तं शार्दूलविक्रीडितेनाह विप्राणामिति गर्भादि न्मारभ्याष्टमे सौरे वर्षे ऽथवा जनेरुत्पत्तिदिनात् सौरे वर्षेष्टमे सति विप्राणां व्रतबंधनं नित्यं निगदितं अथ काम्यं विप्राणामेव गर्भाज्जनेर्वा पंचमे वर्षे कार्यं एवं क्षितिभुजां क्षत्रियाणां गर्भाज्जनेर्वा षष्ठे काम्यं गर्भाज्जनेर्वा एकादशे सौरे वर्षे नित्यं वैश्यानां पुनस्तथैवाष्टमे काम्यं तथैव गर्भाज्जनेर्वा द्वादशे नित्यं नारदः आधानादष्टमे वर्षे गर्भतो वाथ जन्मनः राज्ञामेकादशे मौंजीबंधनं द्वादशे विशामिति अत्र फलश्रवणान्नित्यमित्यवसीयते मनुः ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पंचमे राज्ञो बलार्थिनः षष्ठे वैश्यस्यार्थार्थिनोष्टमे अत्र फलश्रवणात्काम्यता पैठीनसिना गर्भपंचमे व्रतबंधनमुक्तं गर्भपंचमे ब्राह्मणमुपनयेदिति गर्भषष्ठेः ष्टमे च क्षत्रियविशोर्ज्ञेयः गर्भादिः संख्यावर्षाणामिति स्मृतेश्च आपस्तंबसूत्रे गर्भाष्टमेषु ब्राह्मणमुपन

विप्राणां व्रतबंधनं निगदितं गर्भाज्जनेर्वाष्टमे वर्षे वाप्यथ पंचमे क्षितिभुजां षष्ठे तथैकादशे वैश्यानां पुनरष्टमेप्यथ पुनः
स्याद्द्वादशे वत्सरे काले यद्द्विगुणे गते निगदिते गौणं तदाहुर्बुधाः ३९॥

ये त्रु गर्भैकादशेषु वैश्यमिति बहुत्वान्यथानुपपत्त्या गर्भपंचमसप्तमाष्टमेष्विति वृत्तिकृद्व्याख्यानात् त्रयाणामपि नित्यकालता एवं गर्भैकादशेष्वित्यादावपि व्याख्येयं एतच्च तच्छाखाध्यायिविषयं ज्ञेयं अथ गौणकाल उच्यते निगदिते प्रोक्ते गर्भाज्जनेर्वाष्टमे इत्यादिके काले तस्मिन् द्विगुणिते सति तद्व्रतबंधनं गौणमाहुः यथा ब्राह्मणस्य षोडशवर्षपर्यंतं॥ क्षत्रियस्य द्वाविंशतिवर्षपर्यंतं वैश्यस्य चतुर्विंशतिवर्षपर्यंतं गौणमित्यर्थः मनुः आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते आद्वाविंशात् क्षत्रबंधोरा चतुर्विंशतिर्विशः अतऊर्ध्वं त्रयोप्येते यथाकालमसंस्कृताः सावित्रीपतिता व्रात्या भवंत्यपि च गर्हिताः इति केशवः सस्वमौंजीमुख्यकालेष्वष्टम ध्याधमाः समाः तिस्रः केशववदेवत्रः प्रोक्ता मौंजीनिबंधने इति ३९ ॥ ॥

मु० टी०
शु० प्र०
६

सानांऊर्जाषाढतपस्यशुक्रतपसांकार्तिकाषाढज्येष्ठफाल्गुनमाघानां कृष्णपक्षेक्रमेणशरांगाब्धयः शक्राः पंचएतास्तिथयः शून्याः यथा कार्तिक
कृष्णेपंचमीशून्या एवमाषाढकृष्णेषष्ठी फाल्गुनकृष्णेचतुर्थीज्येष्ठकृष्णेचतुर्दशी माघकृष्णेपंचमी अथैषामेवकार्तिकादिमासानांशुक्लपक्षेश
क्राग्न्यग्निविश्वरसाःक्रमाच्छून्याः यथा कार्तिकशुक्लेचतुर्दशीशून्या आषाढशुक्लेसप्तमी फाल्गुनशुक्लेतृतीया ज्येष्ठशुक्लेत्रयोदशी माघशुक्ले
षष्ठीचेति वसिष्ठः अष्टमीनवमीचैत्रेपक्षयोरुभयोरपि माघेद्वादशीत्याज्यापक्षयोरुभयोरपि ज्येष्ठेत्रयोदशीनिंद्यासितेकृष्णेचतुर्दशी आ
षाढेकृष्णपक्षस्यषष्ठीशुक्लेतुसप्तमी द्वितीयाचतृतीयाचश्रावणेसितकृष्णयोः प्रथमाचद्वितीयाचनभस्येमासिनिंदिते दशम्येकादशीनिंद्यामासीचे

गोष्टैचोभयपक्षगाश्चतिथयः शून्याबुधैः कीर्तिताऊर्जाषाढतपस्यशुक्रतपसांकृष्णेशरांगाब्धयः १० शक्राःपंचसितेशक्रा
ग्न्यग्निविश्वरसाःक्रमात् तथानिंद्यंशुभेसार्पेद्वादश्यांवैश्वमादिमे ११ अनुराधाद्वितीयायांपंचम्यांपित्र्यभंतथा त्र्युत्तराश्चतृ
तीयायामेकादश्यांचरोहिणी १२ स्वातीचित्रेत्रयोदश्यांसप्तम्यांहस्तराक्षसे नवम्यांकृत्तिकाष्टम्यांपूभाषष्ठ्यांचरोहिणी १३

शुक्लकृष्णयोः ऊर्जेचतुर्दशीशुक्लाकृष्णपक्षेतुपंचमीसप्तमीचाष्टमीसौम्येपक्षयोरुभयोरपि पौषेपक्षद्वयेचैवचतुर्थीपंचमीतथा माघेतुपंचमीषष्ठी
शुक्लेकृष्णेयथाक्रमं तृतीयाचचतुर्थीचफाल्गुनेसितकृष्णयोः तिथयोमासशून्याख्यावंशवित्तविनाशनाः आसुश्राद्धंप्रकुर्वीतनैवमंगलमाचरेदिति
१० अथनक्षत्रसंबंधिदोषान्सार्धानुष्टुप्द्वयेनाह तथेति अनुराधेति स्वातीतिच शुभेकृत्येद्वादश्यांसार्पंमाश्लेषानिंद्या आदिमेप्रतिपदिवैश्वमु
त्तराषाढा राक्षसमूलं लक्ष्यः द्वितीययाचानुराधात्र्युत्तराश्चतृतीयया पंचम्यांचमघायुक्ताचित्रास्वात्यौत्रयोदशीप्रतिपद्युत्तराषाढानवम्यांकृत्तिकाय
दिसप्तम्यांहस्तमूलेचषष्ठ्यांब्राह्म्यंभवेद्यदि पूर्वभाद्रपदाष्टम्यांएकादश्यांचरोहिणी द्वादश्यांचयदाश्लेषात्रयोदश्यांमघायदि इत्यादि एषुकार्येकृ
तेचेत्स्यात्षण्मासान्मरणंध्रुवमिति ११ १२ १३॥

रामः
६

दर्शीचंदुवारेद्वादशीचार्कवासरे षष्ठीबृहस्पतिर्वारेतृतीयाबुधवासरे अष्टमीशुक्रवारेचनवमीशनिवासरे पंचमीभौमवारेचदग्धयोगाःप्रकीर्तिताः
अथविषयोगाः वेदेति चतुर्थ्यादितिथयः अर्कादिवारेषुविषाख्याभवंति यथा रवौचतुर्थीविषाख्या चंद्रेषष्ठी भौमेसप्तमी बुधेद्वितीया बुधेभद्रारूपः
सिद्धियोगस्तुसप्तमीद्वादश्योरपरितोर्थः एवंनवमीशन्यादावपि गुरावष्टमी शुक्रेनवमी शनौसप्तमी तथाचगुरुः षष्ठीशशांकेनवमीचशुक्रेबुधेद्वितीया
तपनेचतुर्थी जीवेष्टमीसौरिकुजेद्विसप्तमीयोगाविषाख्याकुलनाशनाःस्युः अथहुताशनाख्याः सूर्यागेति द्वादश्यादितिथयः सूर्यादिवारेषुहुता
शनाख्याःस्युः वसिष्ठः सप्तषष्ठ्यादितिथयःसोमवारादिभिर्युताः अग्निजिह्वाःसप्तयोगामंगलेषुविगर्हिताः ८ अथयमघंटाः मघाविशाखादिन
क्षत्राणिरविवारादिषुयमघंटसंज्ञानिस्युः यथा अर्कवारेमघायमघंटः एवंसोमवारेविशाखाइत्यादि गर्गः मघाविशाखाआर्द्राचमूलंमृक्षंचकृत्तिका

सूर्यागसप्ताररागोदिगीशाद्दग्धाविषाख्याश्चहुताशनाश्च ८ सूर्यादिवारेतिथयोभवंतिमघाविशाखाशिवमूलवह्निः ब्राह्म्यंकरो
ऽर्यमघंटकाश्चशुभेविवर्ज्योगमनेत्ववश्यं ९ भाद्रेचंद्रदृशौनभस्यनललनेत्रेमाधवेद्वादशीपौषेवेदशराइषेदशशिवामार्गेद्रिना
ऽऽगामधौ।

रोहिणीहस्तइत्युक्तेयमघंटाःक्रमाद्रवेः एतेदग्धादियोगाःशुभेविवाहादिकार्येवर्ज्याःगमनेतुयात्रायामवश्यंवर्ज्याःएषामपवादोवसि
ष्ठेनोक्तः दिवामृत्युप्रदाःपापदोषास्त्वेतेनराणांत्रिषुशुभकार्येषुप्रसूतौचसर्वदापरिवर्जयेदिति आवश्यकदक्षत्वेदीपिकायां यमघंटेत्यजेदष्टौमृत्यौद्वाद
शनाडिकाइति अन्येषांपापयोगानांमध्याह्नात्परतःशुभमिति ९ अथचैत्रादिमासेशून्यतिथीः शार्दूलविक्रीडितेनाहानुष्टुभावाह भाद्रेइति
शक्राइतिच भाद्रपदादिश्लोकोक्तमासेषुचंद्रदृशौप्रतिपद्द्वितीयेइत्यादिक्रमोक्ततिथयः उभयपक्षगाःशुक्लकृष्णपक्षगताः शून्यसंज्ञकाःबु
धैःकीर्तिताःकथिताः यथा भाद्रपदेप्रतिपद्द्वितीयेउभयपक्षेशून्ये एवंनभसिश्रावणेउभयपक्षेतृतीयाद्वितीयेशून्येइत्यादि अनुक्तमा।

अथचैत्रादिमासेषुशून्यनक्षत्राण्यनुष्टुब्द्वयेनाह कदास्रेति कदास्रभेरोहिण्यश्विन्यौचैत्रेशून्येनक्षत्रे एषुशुभकार्येनकार्यं यतोवित्तविनाशदाः
धननाशकराइत्यर्थः एवंवैशाखेत्वाष्ट्रवायूचित्रास्वात्यौशून्यभे पाशीवरुणस्तद्भंशततारा अजपात्पूर्वाभाद्रपदावसिष्ठः अश्विनीरोहिणीचैत्रेशून्यभे
परिकीर्तिते चित्रास्वातीचवैशाखेज्येष्ठेविश्वेज्यतारकौभगवासवमाषाढेश्रावणेहरिविश्वभे नभस्येवारुणांत्यक्षेमजपादश्वयुज्यपि कार्तिकेपितृवह्नी
द्वेसौम्यचित्राहिर्दैवतेपौषेहस्तकराद्रौः सुर्माघेमूलंचविष्णुभं तपस्येशक्रभरणीशून्यभान्याहुरग्रजाः एषुयत्नकृतंकर्मधनैःसहविनश्यतीति १४
१५ अथचैत्रादिमासेषुशून्यराशीननुष्टुभाह घटइति वसिष्ठः घटमत्स्यवृषायुग्ममेषकन्याः सवृश्चिकाः तुलाचापकुलीराख्यामृगसिंहाश्वराशयः चै

कदास्रभेत्वाष्ट्रवायूविश्वेज्यौभगवासवौ वैश्वश्रुतीपाशिपौष्णे अजपादग्निपित्र्यभे १४ चित्राद्वीशौशिवाश्व्यर्काःश्रुतिमूलेय
मेंद्रभे चैत्रादिमासेशून्याख्यास्तारावित्तविनाशदाः १५ घटोझषोगौर्मिथुनंमेषकन्यालितौलिनः धनुःकर्कोमृगःसिंहश्चै
त्रादौशून्यराशयः १६ पक्षादितस्त्वोजतिथौघटेणौपंचास्यनक्रौमिथुनांगनेच चापेंदुभेकर्कहरीहयांत्यौगोंत्यौचनष्टेतिथिशू न्यलग्ने १७

त्रादौमासेशून्याख्यावंशवित्तविनाशनाःइति १६ अथविषमतिथिषुदग्धलग्नानींद्रवज्रयाह पक्षादितइति शुक्लपक्षकृष्णपक्षा
दितःप्रतिपदमारभ्यतः ओजतिथौविषमतिथौप्रतिपत्तिथौघटेणौतुलामकरौ तृतीयायांमृगेंद्रनक्रौसिंहमकरौ पंचम्यांमिथुनकन्ये सप्तम्यांचा
पंदभेधनुःकर्कौ नवम्यांकर्कहरीकर्कसिंहौ एकादश्यांहयांत्यौधनुर्मीनौ त्रयोदश्यांगोंत्यौवृषमीनौ एतेतिथिशून्यलग्ने तस्यांतस्यांतिथौनष्टे
निषिद्धं वसिष्ठः मृगसिंहौतृतीयायांप्रथमायांतुलामृगौ पंचम्यांबुधराशीद्वौसप्तम्यांचापचंद्रभे नवम्यांसिंहकीटाख्यावेकादश्यांगुरोर्गृहे वृष
मीनौत्रयोदश्यांदग्धसंज्ञास्तमीरिताः दग्धसमनियत्कर्मतत्सर्वंप्रणश्यति १७॥

साकेतामिथिलाचंपा कौशांबी कौशिकी तथा॥ आहिच्छत्रं गयाचैध्यां मध्यदेशेहि कथ्यते ०



अथैषांदुष्टयोगानांशुभकृत्यावश्यकत्वेसतिपरिहारमाहनारदः तिथयोमासशून्याइतिद्वाभ्यां पंगंधकाणलग्नानिविवाहप्रकरणेवक्ष्यंते जगन्मोहने केंद्रेचैवत्रिकोणेचशुभेहुपचयेपिवा एकोपिबलवांश्चापिशून्यतिथ्युडुनाशकाइति १८ १९ अथहस्तार्कादिसिद्धियोगानांतिथिविशेषेणातिनिंद्यत्वमनुष्टुप्द्वयेनाह वर्जयेदिति बुधानुराधामितिच श्रीपतिः हस्तोरवौशशधरेचमृगोत्तमांगंभौमेश्विनीबुधदिनेचतथानुराधा पुष्यागुरौभृगुसुतेपिचपौष्णधिष्ण्यंरोहिण्यथार्कतनयेऽमृतसिद्धियोगाः एतेपंचम्यादितिथिषुचेद्भवंतितदावर्ज्याः यथापंचम्याहस्तार्कोवर्ज्यः

तिथयोमासशून्याश्चशून्यलग्नानियान्यपि मध्यदेशेविवर्ज्यानिनदूष्याणीतरेषुतु १८ पंगंधकाणलग्नानिमासशून्याश्चराशयः गौडमालवयोस्त्याज्याअन्यदेशेनगर्हिताः १९ वर्जयेत्सर्वकार्येषुहस्तार्कंपंचमीतिथौ भौमाश्विनींचसप्तम्यांषष्ठ्यांचैंद्रवंतथा २० बुधानुराधामष्टम्यांदशम्यांभृगुरेवतीं नवम्यांगुरुपुष्यंचैकादश्यांशनिरोहिणीं २१ गृहप्रवेशेयात्रायांविवाहेचयथाक्रमं भौमेश्विनींशनौब्राह्म्यंगुरौपुष्यंविवर्जयेत् २२ आनंदाख्यःकालदंडश्चधूम्रोधातासौम्योध्वांक्षकेतूक्रमेण श्रीवत्साख्यावज्रकंमुद्गरश्चछत्रंमित्रंमानसंपद्मलुंबौ २३॥

एवमग्रेपिषष्ठ्यादौ अन्यैरुक्तंच अर्केहस्तःपंचमीचसोमेषष्ठीचचंद्रभं अश्विनीसप्तमीभौमेबुधेमैत्रंतथाष्टमी गुरौपुष्यंचनवमीदशमीरेवतीभृगौ एकादशीशनौब्राह्म्यंवर्जयेत्सर्वदाबुधैरिति २० २१ अन्यदप्याह गृहप्रवेशइति ननुभौमाश्विन्यादीनांगृहप्रवेशादौस्वतएववारनक्षत्रदोषादप्राप्तेः किमर्थमिदंवचनं उच्यते यदिविष्टिव्यतीपातादिनंवाप्यशुभंभवेत् हन्यतेऽमृतयोगेनभास्करेणतमोयथेतिवचनात् कार्यमात्राप्राशस्त्यप्राप्तेस्त्रावश्यत्वप्रवेशादिसंभावनास्यात्तदर्थमपवादवचनंयुक्तमेव २२ अथानंदादियोगान्शालिन्युपजातिकाभ्यामाह आनंदइति उत्पातइतिच २३

२४ अथैषां गणनोपायमनुष्टुभाह दस्रादिति अत्र नक्षत्राणां साभिजितां गणना कार्या यतोऽष्टाविंशतिर्योगाः यथाऽर्कदिने अद्यदिननक्षत्रं श्रवणस्त
दाश्विनीतः साभिजिद्गणनया त्रयोविंशतिसंख्यमस्ति तथा सत्यानंदादियोगेषु त्रयोविंशतिसंख्यो गदयोगो जातः एवमिंदुवारे मृगशीर्षाद्गणनया
आनंदादयो ज्ञेयाः २५ अथैतेषु कियतां दुष्टयोगानामवश्यकर्तव्ये परिहारं शालिन्याह ध्वांक्ष इति ध्वांक्षवज्रमुद्गरयोगेष्वाद्याः पंचनाड्यः पं
चघटिका वर्ज्याः पद्मलुंबयोर्वेदाश्चतस्रः एवं गदेऽश्वाः सप्त धूम्रे भूरेकैव काणे घटिद्वयं मूसले द्वे घटिके राक्षसमृत्यूत्पातकालाः सर्वे षष्टिघटिका
त्मका वर्ज्याः कालः कालदंडः अत्रानुक्तेऽपि चरे योगे घटित्रयं वर्ज्यं उक्तं च ज्योतिःसागरे ध्वांक्षे द्वादशमुद्गरेषु घटिकास्त्याज्याः क्षपंचादितः पद्मलुंबक

उत्पातमृत्यू किल काणसिद्धी शुभोऽमृताख्यो मुसलं गदश्च मातंगरक्षश्चरसुस्थिराख्यः प्रवर्धमानाः फलदाः स्वनाम्ना २४ दास्रा
दर्के मृगादिंदौ सार्पात् भौमे करात् बुधे मैत्राद्गुरौ भृगौ वैश्वात् गण्या मंदे च वारुणात् २५ ध्वांक्षे वज्रे मुद्गरे चेषुनाड्यो वर्ज्या वेदाः
पद्मलुंबे गदेऽश्वाः धूम्रे काणे मौसले भूर्द्वयं द्वे रक्षोमृत्यूत्पातकालाश्च सर्वे २६ सूर्यभाद्वेदगोतर्कदिग्विश्वनखसंमि
ते चंद्रर्क्षे रवियोगाः स्युर्दोषसंघविनाशकाः २७ सूर्येऽर्कमूलोत्तरपुष्यदास्रं चंद्रे श्रुतिब्राह्मशशीज्यमैत्रं ॥ ६ ॥

योऽश्वतस्त उदिता धूम्रे सदैका पुनः द्वे काणे मुसलाह्वयेऽपि च गदे सप्तैव तिस्रश्चरे मृत्यूत्पातकरक्षसां दिनगताः कालदंडेन तथा २६ अथ दोषापवा
दभूतान् रवियोगाननुष्टुभाह सूर्यभादिति सूर्यो यत्र तन्नक्षत्रमारभ्य चंद्रर्क्षे दिननक्षत्रे चतुर्नवषट्दशत्रयोदशविंशतिसंख्याके सति रवियोगाः स्युः ते च दो
षसमूहानां नाशकराः उक्तं च सूर्याच्चतुर्थे दशमे च षष्ठे विश्वर्क्षके विंशतिमे नवर्क्षे भवंति षड्भानुसहस्रयोगाः कुयोगविध्वंसकराः प्रदिष्टाः २७ अथ
सूर्यादिवारेषु नक्षत्रविशेषैः सिद्धियोगानिंद्रवज्रोपजातिकाभ्यामाह सूर्येऽर्क इति जीवेंद्र इति च रविवारे हस्तमूलत्र्युत्तरापुष्याश्विनीनक्षत्राणि पूर्वैराचार्यैः

सर्वार्थसिध्यैकथितानि एवंचंद्रेश्रवणादीनि एतेसिद्धियोगाः दस्रादर्केमृगादिंदावित्यादिप्रकारेण आनंदादिसमीचीनसद्योगसंबंधिनक्षत्रैरुपनिबद्धाः भौ
मपराक्रमेणकुयोगा अप्युक्ताः ज्येष्ठावह्निमघाविशाखवसवोमैत्रंयमाख्यंरवौसोमेरौद्रविशाखपुष्यपवनाश्विन्यावषाढाद्वयं भौमेविश्वजलेशमित्र
वसवःप्राग्भाद्रसार्पेशिवःसूर्येरेवतिपूर्वयोनिभरणीवस्वश्विमूलाबुधेजीवेमूलमघाद्रीयाम्यवरुणा पूषाग्निरोहिणीःशुक्रेस्वातिभुजंगदैवतमघा
पुष्याजनरोहिणी सौरादर्यममूलहस्तवरुणाषाढाद्वयंरेवतीचित्राविश्वमघाश्वसर्वेसमयेत्याज्याअयोगाबुधैरिति २८ २९ अथावश्यकवर्ज्यत्वेनझ
टित्युपस्थित्यर्थंउत्पातंमृत्युकाणसिद्धियोगान्शालिन्याह द्वीशादिति विशाखादिचतुर्नक्षत्रैरुत्पातमृत्युकाणौचसिद्धियोगाः रविवारेस्युः यथार

भौमेऽश्व्यहिर्बुध्न्यकृशानुसार्पंज्ञेब्राह्ममैत्रार्ककृशानुचांद्रं २८ जीवेंत्यमैत्राश्व्यदितीज्यधिष्ण्यंशुक्रेंत्यमैत्राश्व्यदितिश्रवोभंशनौश्रु
तिब्राह्मसमीरभानिसर्वार्थसिध्यैकथितानिपूर्वैः २९ द्वीशात्तोयाद्वासवात्पौष्णभाच्चब्राह्मात्पुष्यादर्यमर्क्षाच्चतुर्भैः स्यादुत्पा
तोमृत्युकाणौचसिद्धिर्वारेऽर्काद्येतत्फलंनामतुल्यं ३० कुयोगास्तिथिवारोत्थास्तिथिभोत्थाभवारजाः हूणवंगखशेष्वेववर्ज्या
॥स्त्रितयजास्तथा ३१

वौविशाखाउत्पातः अनुराधामृत्युः ज्येष्ठाकाणः मूलंसिद्धिरिति एवंसोमवारादौपूर्वाषाढादितोज्ञेयं तत्फलंनामस
दृशंउत्पातमृत्युकाणानिषिद्धाःसिद्धिःशुभदेत्यर्थः नारदः विशाखादिचतुर्वर्गमर्कवारादिषुक्रमात् उत्पातमृत्युकाणाख्यायोगाश्चामृतसंयुताः
ति ३० अथदेशविशेषेणकुयोगानांपरिहारमनुष्टुभाह कुयोगाइति तिथिवारोत्थाः कुयोगाः क्रकचादयः तिथिभोत्थाः अनुराधाद्वितीयायामि
त्यादयः भवारजाः याम्यंत्वाष्ट्रंवैश्वदेवमित्यादयः त्रैयास्त्रितयजाः तिथिवारनक्षत्रजाः वर्जयेत्सर्वकार्येषुहस्तार्कंपंचमीतिथावित्येवमादयस्तेसर्वेहू
णवंगखशदेशेष्वेववर्ज्याः अन्यदेशेननिषिद्धाइत्यर्थः नारदः तिथिवारोद्भवानेष्टायोगावारर्क्षसंभवाः हूणवंगखशेष्वेवान्यदेशेषुतेशुभप्रदाइति ३१

अथसमस्तशुभकृत्येवर्ज्यान् शार्दूलविक्रीडितेनाह सर्वस्मिन्निति सर्वस्मिन्शुभेकार्ये एतानिवैनिश्चयेनत्यजपरिहरेत्यर्थः विधुनापापेनवापापैः क्षी
णेंदुर्कमहीसुतार्कतनयैर्वायुजोयुक्तो नतुलवोलग्नलग्ननवांशोत्याज्यो पूर्णक्षीणोपिवाचंद्रोलग्नेसर्वत्रगर्हितइतिकश्यपोक्तेः पापैर्दृलग्नगेवांशगेतो
वर्ज्यैःशुभेसदेतिच निशाङ्कोरध्रैगत्यधोदिनार्धेच घटीत्रयंसविंशतिपलानिदशपूर्वंदशपश्चाच्चपरिहर उक्तंचमूर्तेः कालोनिवसतिमहानिशायांचदिनदलेय
स्मात् दशपूर्वंदशपरतस्तस्माद्वर्ज्यानिचपलानि कुनवांशकंपापग्रहनवांशकंपरिहर अथग्रहणतः पूर्वंदिनानांत्रयंपरिहर उत्पातग्रहतः उत्पातादिव्यभौमांतरि
क्षात्येयस्मिन्दिनेभवंतिततोः त्र्यहाश्चसप्तदिनानिवर्ज्यानि ग्रहोग्रहणंतस्मात् अपिसप्तदिनानिवर्ज्यानि उक्तंच चंद्रसूर्योपरागेषु त्र्यहंपूर्वंशुभंत्यजेत् सप्ता
हमशुभंपश्चात्तस्मात्ग्रहणसूतकंत्रिविधोत्पातनश्चोर्ध्वेसिंहिकासूनुदर्शने सप्तएतेनकुर्वंतियात्रोद्वाहादिमंगलमिति अंगिराअपि सर्वग्रासेतुसप्ताहमर्ध

सर्वस्मिन्विधुपापयुक्ततुलवावर्द्धेनिशाङ्कोघटीत्र्यंशावैकुनवांशकंग्रहणतः पूर्वंदिनानांत्रयं॥

ग्रासेदिनत्रयंत्रिद्व्येकांगुलतोग्रासेदिनमेकंविवर्जयेत् वसिष्ठः सर्वग्रासेदिनान्यष्टौसर्वकार्येविवर्जयेत् षट्दिनानित्रिभागेनेअर्धग्रासेचतुर्दिनं चतु
र्ग्रासेदिनत्रयंत्रिद्व्येकांगुलतोग्रासेदिनमेकं ...

भेदस्तारा खेटयोर्यत्रवास्यादिति विवाहवृंदावने नारदः ग्रहणोत्पातभेत्याज्यं मंगलेषुऋतुत्रयमिति ननु नक्षत्रसंधौ जायमाने ग्रहणं किं नक्षत्रं दूषयेदित्य त्राह शार्ङ्गधरः यस्मिन्विधुंराहुरितंयधिष्ण्येगं स्त्वातितन्त्याज्यमृतुत्रयं स्यात् पाणिग्रहे पुं मरणं विधत्तेद्वयोर्मयोश्चेद्वयमेवजह्यात् अन्यत्र पक्षांतरेण ग्रहणद्वयं साधदानदानद्ग्रहणोपगंभं पक्षाद्विस्तुद्भवति द्वितीयपाणिग्रहे शुध्यति भोगषट्कात् इति ३२ अथ ग्रहणनक्षत्रे यासमे देननिंद्यान्मासदि वसांश्चैवं वर्जयाह नेष्टमिति ग्रहर्क्षं ग्रहणनक्षत्रं क्रमात्पूर्णार्धचतुर्थांशः ग्रासे सति षट्त्र्येक मासान्नेष्टं गुरुः सर्वग्रासे खुषण्मासान् त्रीन्मासांस्तद्दले ग्रहे आपादग्रहणे धिष्ण्यमासमेकं विवर्जयेत् अथ क्रमात् अस्तेः स्तगेग्रहणार्धग्रासेउभयोः प्राक्पश्चाच्चत्रित्रिघस्रानेष्टाः तथा अर्धे खंडे ग्रस्तास्त लोदययोरभावेपि अर्धग्रासेउभयोः प्राक्पश्चाच्चत्रित्रिघस्रानेष्टाः गुरुः ग्रस्तास्ते त्रिदिनं पूर्वं पश्चाद्ग्रस्तोदये तथा खंडग्रासे त्रित्रिदिनंनिः शेषसन्नस

उत्पातग्रहतोः ग्रहोश्चशुभदोत्पातेश्चदुष्टंदिनं षण्मासं ग्रहभिन्नभं त्यजशुभे योढं तुयोत्पातभं ३२ नेष्टंग्रहर्क्षंसकलार्धपाद ग्रासेक्रमात्तर्कगुणैदुमासान् पूर्वंपरस्तादुभयोस्त्रिघस्राग्रस्तेस्तगेवाप्युदिते धखंडे ३३ जन्मर्क्षमासतिथयोव्यतिपातभद्रावै धृत्यमापितृदिनानितिथिक्षयवृद्धी॥ ५५ ग्रचेति कश्यपः ग्रस्तोदयेपरेद्दे वा ग्रस्तास्तेवाक् राशीनयोः घुनिशार्धेतृभयंनतद्दंडीखंडव्यवस्थ

योरिति ३३ अथ सामान्यतो वश्यवर्ज्यानि पंचांगदूषणादीनि वसंततिलकानुष्टुभ्यामाह जन्मर्क्षेति परिघार्धेतिच जन्मनक्षत्रजन्ममासजन्मति थयः शुभकर्मसु वर्ज्याः अयंनिषेधश्चाद्यगर्भस्यैव नारदः नजन्ममासे जन्मर्क्षेनजन्मादिवसेपिवा आद्यगर्भसुतस्याथदुहितुर्वाकरग्रहइति ज न्ममासः सवित्तेयोवर्जितः सर्वकर्मसु वस्तुतस्तु यत्र शुक्लादि चांद्रमासे चैत्रादौ जन्माभूत् सचांद्रोमासो जन्ममासस्त्याज्यः इंद्राग्नीयत्र हूयेते मासादिः संप्रकीर्तिता अग्नीषोमोस्मृतौमध्ये समासोपितृसोमकाविति हारीतोक्तमासलक्षणात् व्यतीपातादयश्चवर्ज्यः पितृदिनं मातापित्रोर्मरणदिनं तिथिक्षयवृद्धी तिथिक्षयस्तिथिवृद्धिश्च तल्लक्षणमाह वसिष्ठः स्पृशेत्तिस्रस्तिथयोवारेएकस्मिन्नवमातिथिः तिथिर्वारत्रयेचैकात्रिद्युस्पृक् द्वेपिनिंदिते।

न छुटि

राम:
९

न्यूनमासः अधिमासश्चवर्ज्यः संक्रमद्वयसहितः क्षयमासः अधिकमासोऽसंक्रांतः कुलिकार्धप्रहरौ वक्ष्यमाणौ पातौ महापातः विष्कुंभयोगवज्रयो
गयोराद्यंघटिकात्रयमेववर्ज्यं एवंप्रकारेणकेचिद्वज्रयोगेनवघटिकावर्ज्या इत्युक्तं यथा विष्कुंभाद्यघटीत्रयंचनवकं व्याघातवज्रोऽद्भवेदिति वृत्तश
तेतया व्याघातेवज्रकेकाइतिगणेशज्ञोक्तिविदुक्तिरपिनिरस्ता विष्कुंभवज्रयोस्तिस्रः षट्चगंडातिगंडयोः व्याघातेनवशूलेतुपंचनाड्याविगर्हि
ताइतिकश्यपोक्तेः परिघस्याद्यार्धंवर्ज्यं शूलस्याद्याः पंचगंडातिगंडयोराद्याः षट्षट्घटिकाः व्याघातेचाद्यिमानवघटिकाः वर्ज्याः ३४ ॥ ३५ अथ
पक्षरंध्रतिथीष्वावश्यकत्वेतन्निष्टवर्ज्यघटीश्चानुष्टुभाह वेदांगेति चतुर्थी षष्ठी अष्टमी नवमी द्वादशी चतुर्दशी एताः पक्षरंध्रतिथयो ज्ञेयाः आसूत्सुभ
कृत्यस्यावश्यकत्वे सति आदिमाः क्रमात् वसुकमनुतत्त्वाशाशरानाडीस्त्यजेत् यथा चतुर्थ्याः आदिमा अष्ट घटिकाः षष्ठ्यां नव अष्टम्यां चतुर्दश्यान

न्यूनाधिमासकुलिकप्रहरार्धपातविष्कुंभवज्रघटिकात्रयमेववर्ज्यं ३४ परिघार्द्धंपंचशूलेषट्चगंडातिगंडयोः व्याघाते
नवनाड्यश्चवर्ज्याः सर्वेषु कर्मसु ३५ वेदांगाष्टनवार्केंद्रपक्षरंध्रतिथौत्यजेत् वसुकमनुतत्त्वाशाशरानाडीः पराः शुभाः ३६
कुलिकः कालवेलाच यमघंटश्चकंटकः ॥ वम्यांपंचविंशतिः द्वादश्यांदशचतुर्दश्यां पंचघटिकास्त्याज्या इत्यर्थः पराउर्वरिताः शुभाज्ञे

याः वसिष्ठः चतुर्दशी चतुर्थी च अष्टमी नवमी तथा षष्ठी च द्वादशी चैव पक्षछिद्राह्वयाइमाः क्रमादेतासु तिथिषु वर्जनीयाश्च नाडिकाः भूताष्टमनु
तत्वांकदशाशेषास्तु शोभनाः दोषनाडीषु यत्कर्मकृतं सर्वं विनश्यतीत्यादि कश्यपेनसर्वसाधारण्येनदर्शौ ववर्जिताः ३६ अथकुलिकाकालवेलाय
मघंटककंटकदोषाननुष्टुभाह कुलिक इति वर्तमानवारान्मंदेशनैश्चरेगणिते सतिर्योकोभवतितस्मिन्द्विगुणे योंक स्तत्संख्याक्षणोमुहूर्तः कुलिकोभव
ति एवंबुधेजीवेभौमेवर्तमानवाराद्गणितेयोंकोभवतिससद्विघ्नः क्रमात् कालवेलायमघंटकंटकसंज्ञा दुष्टमुहूर्ताः स्युः यथा रविजः शनिः सप्तसंख्या

कः तस्मिन् द्विगुणे चतुर्दशजाताः केन रवौ चतुर्दशोऽमुहूर्त्तः कुलिकः एवं बुधः संख्या चत्वारः तत द्विगुणोऽष्टमो मुहूर्त्तः कालवेला जीवपंचद्विघ्ने दशमो यम
घंटः भौमे तृतीये द्विघ्ने षष्ठो मुहूर्त्तः कंटकसंज्ञः इत्यर्थः एवं सोमवारादावपि अथ शुभकृत्यावश्यकत्वे सति देशभेदेन कुलिकादिदोषपरिहारमाह ग
र्गः विंध्यस्योत्तरकूले तु यावदातुहिमाचलं यमकंटकदोषोऽस्ति नान्यदेशेषु विद्यते मत्स्यांगमागधांधेषु यमघंटस्तु दोषकृत् काश्मीरे कुलिकं दुष्टमर्धया
मस्तु सर्वत इति केचित्मते कालवेला रवितः भूराश्विनकोनला गा बुधयो ५।२।६।३।७।४ गजेंदव ८।१॥ दिने निशायां मृतुवेदने त्रनगेषुरामा ६।४।२।
१।७।५।३ विधुदंतिनौ १।८ चगजेंदू इत्यर्धप्रहरद्वयमानौ यात्रायामरणे काले वैधव्यं पाणिपीडने व्रते ब्रह्मवधः प्रोक्तः शुभकर्मततस्त्यजेत् गौडाः

वाराद्द्विघ्नेक्रमान्मंदे बुधे जीवे कुजे क्षणः ३७ सूर्ये षट्स्वरनागदिङ्मनुमिता श्चंद्रेऽब्धिषट्कुंजरांकार्काविश्वपुरंदराक्षितिसुते द्व्य
ब्ध्यग्नितर्कोदिशः सौम्ये द्व्यब्धिगजांकदिङ्मनुमिता जीवेद्विषट्भास्कराः शक्राख्यातिथयः कलाश्वभृगुजे वेदेषुतर्काग्न
हाः ३८ दिग्भास्करा मनुमितोऽश्वशनौ शशिद्विनागादिशा भवदिवाकरसंमितास्त्र दुष्टक्षणः कुलिककंटककालवेलास्तु श्वा
धेयामयमघंटगताः कलांशाः ३९॥ सूर्ये वेदशरौ ४।५ चंद्रे हयपक्षौ ७।२ कुजे क्षिभूः २।१॥ त्रेबाणाग्नी ५।३ गुरौ दंतिहयौ ८।
७। शुक्रे त्रिवेदकौ ३।४॥ मंदे तर्कगजौ ६।८ त्रेयौ यामार्धाः वशुभौ सदेति ३७ अथ सूर्यादिवारेषु शिष्याणां सद्य एव दोषज्ञानार्थं दुर्मुहूर्ता
दिनामकान् मुहूर्त्तान् शार्दूलविक्रीडितवसंततिलकाभ्यामाह सूर्य इति दिग्भास्करा इति च रविवारे षष्ठसप्ताष्टमदशमचतुर्दशमुहूर्त्ता निंद्याः।
एवं सर्वत्र अयमर्थोमूलेन [illegible]तः स्पष्ट एव एषु मुहूर्त्तेषु कश्चिद्दुर्मुहूर्त्तः कश्चित्कुलिकः कंटकः कालवेलाख्यः अर्धयामाख्यः यमघंटाख्यः सा
त तत्प्रमाणकलांशाः [illegible]।मानस्य षोडशांशाः ३८ ३९ ॥ ॥ ॥

अथविवाहादिशुभकृत्येहोलिकाष्टकनिषेधंदेशपरत्वेनाह विपाशेति विपाशाइरावतीशतद्रुः एताः पश्चिमदेशप्रसिद्धाः नद्यस्तासांतीरेउभयतटव
र्तिदेशेत्रिपुष्करदेशेचहोलिकाफाल्गुनशुक्लपौर्णिमाततःप्राग्दिनाष्टकंविवाहादिशुभकृत्येनेष्टंनिषिद्धंअर्थादन्यदेशेननिषिद्धं ४० अथमृत्युयोगादि
दुष्टयोगपरिहारमनुष्टुभाह मृत्युक्रकचेतिमृत्युयोगादास्रादर्केइत्यादिनाआनंदादिषूक्ताः क्रकचाः षष्ठ्यादितिथयोमंदाद्विलोममित्युक्ताः दग्धादियो
गाः सूर्येशपंचाग्नीत्यादिनोक्ताः चंद्रेशस्तेकर्तुर्गोचरेणसमीचीनेसति एतान्योगान्शुभान्शुभफलदान्जगुःऊचुः राजमार्तंडः क्रकचान्मृत्युयो
गाख्यादिनंदग्धंतथैवच चंद्रेशुभेक्षयंयातिहृक्षावज्रहतादिव अथकेचिदाचार्याः यामांतरप्रहरोत्तरंमृत्युक्रकचदग्धादीन्शुभान्जगुः सएवाह उ
त्पातेयमघंटेचकाणेचक्रकचेतथा तिथौदग्धेचकालेचप्राग्यामात्परतः शुभमिति अथान्येआचार्याः मृत्युक्रकचदग्धादीन्यात्रायामेवनिंदि

मु०३

विपाशैरावतीतीरेशतद्र्वाश्चत्रिपुष्करे विवाहादिशुभेनेष्टंहोलिकाप्राग्दिनाष्टकं ४० मृत्युक्रकचदग्धादीनिंदोःशस्तेशुभा
जगुः केचिद्यामोत्तरंचान्येयात्रायामेवनिंदितान् ४१ अयोगेसुयोगोपिचेत्स्यात्तदानीमयोगंनिहत्यैषसिद्धिंतनोति॥ ॥

तान् जगुः विवाहादौतुनदोषः लल्लः वारर्क्षतिथियोगेषुयात्रामेवविवर्जयेत् विवाहादीनिकुर्वीतगर्गादीनामिदंवचः निंद्येष्विति शेषः अन्य
च अयोगेषुचसर्वेषुवर्जयेद्घटिकाद्वयं उत्पातमृत्युकाणानांपंचषट्सप्तनाडिकाः ४१ पुनरप्यपवादंभुजंगप्रयातेनाह अयोगेइति अयो
गेक्रकचादौसतिचेत्सुयोगः सिद्धियोगोपिस्यात् तदाएषःसिद्धियोगः अयोगफलंनिहत्यसिद्धिंतनोतिनिष्पादयति मार्तंडः अयोगःसिद्धियो
गश्चद्वावेतौभवतोयदि अयोगोहन्यतेतत्रसिद्धियोगःप्रवर्त्तते परेआचार्याःलग्नशुध्याकुयोगादिनाशमाहुः यदाहसएव यत्रलग्नंविना
किंचित् क्रियतेशुभसंज्ञकं तत्रैतेषामयोगानांप्रभवाज्जायतेफलं॥ अथावश्यककृत्येकालांतराभावेपरिहारमाह विष्टिपूर्वमिति॥ ॥

मु०टी०
मु०प्र०
११

विष्टिर्भद्रा सा पूर्वार्धस्य विष्ट्यादिकं मध्याह्नानंतरं शस्तमाहुः उक्तं च विष्टिरंगारकश्चैव व्यतीपातः सवैधृतिः प्रत्यरं जन्मनक्षत्रं मध्याह्नात्परतः शुभमिति ४२. अथ भद्रां शालिन्याह शुक्लेइति शुक्ले शुक्लपक्षे अष्टम्यां पौर्णिमायां च पूर्वार्धे भद्रा स्यात् एकादश्यां चतुर्थ्यां च उत्तरार्धे भद्रा कृष्णपक्षे तृतीयायां दशम्यां च अन्त्यार्धे उत्तरार्धे सप्तम्यां शंभुतिथौ चतुर्दश्यां च पूर्वार्धे पूर्वभागे भद्रा स्यात् भद्रास्वरूपं रत्नमालायां उद्दिष्टोद्र दतरेत्यादि ४३ अथ चतुर्थ्यादितिथिषु भद्रायाः मुखपुच्छविभागं शार्दूलविक्रीडितेनाह पंचद्व्यद्रीति चतुर्थ्यादितिथौ नागपंचादिप्रहरेषु आदिघट्यः शराः पंचसंख्याविष्टेर्भद्राया आस्यं मुखं यथा चतुर्थ्याः पंचमप्रहरे आदिभूताः पंचघट्यो भद्रामुखं एवमष्टम्यां द्वितीयप्रहरे एकादश्यां सप्तमप्रहरे पूर्णिमायां चतुर्थप्रहरे

लग्नशुध्याकुयोगादिनाशं दिनार्धोत्तरं विष्टिपूर्वं च शस्तं ४२ शुक्ले पूर्वार्धेऽष्टमीपंचदश्योर्भद्रैकादश्यां चतुर्थ्यां परार्धे कृष्णेऽन्त्यार्धे स्यात्तृतीयादशम्योः पूर्वे भागे सप्तमीशंभुतिथ्योः ४३ पंचद्व्यद्रिकृताष्टरामरसभूयामादिघट्यः शरा विष्टेरास्यमसद्गजेंदुरसरामाद्र्यश्विबाणाब्धिषु॥

४४ रे तृतीयायामष्टमे सप्तम्यां तृतीये दशम्यां षष्ठे चतुर्दश्यां प्रथमे प्रहरे भद्रामुखं स्यात् तदसत् अशुभमित्यर्थः अथ पुनश्चतुर्थ्यादितिथीनां क्रमेण गजेंदुद्वित्यादिप्रहरेषु अंत्यभवं घटीत्रयं पुच्छसंज्ञं तच्छुभकरं यथा चतुर्थ्या अष्टमप्रहरस्यांत्यघटीत्रयं भद्रापुच्छं एवमष्टम्यादिषु प्रथमादिप्रहरस्यांत्यघटीत्रयं पुच्छं ज्ञेयं तत्र भद्राकर्माणि वसिष्ठः वधबंधविषाग्न्यस्त्रच्छेदनोच्चाटनादियत् तुरंगमहिषोष्ट्रादिकर्म विष्ट्यां तु सिध्यति अंगविभागः कश्यपसंहितायां मुखे पंच गले त्वेका वक्षस्येकादश स्मृताः नाभिश्चतस्रः षट्कट्यां तिस्रः पुच्छे तु नाडिकाः कार्यहानिर्मुखे मृत्युर्गले वक्षसि निःस्वता कट्यामुन्मत्तता नाभौ च्युतिः पुच्छे ध्रुवो जयः अथ विष्टिपरिहारमाह तथेति तिथ्यपरार्धजाता पूर्वार्धभूता विष्टिर्वासरे दिवसे यदि स्यात्तदा शुभकरी॥ ॥ ॥

तमः
११

तथानेनैवप्रकारेणतिथिपूर्वार्द्धोत्थारात्रौशुभकरी नारदनिषेधमाह पूर्वार्धोत्थायदानिशि तदाविष्टिः शुभायेतिकमलासनभाषितं ४४ अथभद्रानि
वासंतत्फलंचानुष्टुभाह कुंभकर्केति अजेचंद्रेकुंभद्वयेकुंभमीनस्थेकर्कद्वयेकर्कसिंहराशिस्थितेमनुष्यलोकेतिष्ठति अथमेषात्त्रयेमेषवृषमिथुनस्थि
तेअलिगेवृश्चिकस्थेचंद्रेचस्वर्गलोकेभद्रातिष्ठति कन्यातुलाधनुर्मकरराशिषुचंद्रेअधःपाताललोकेभद्रातिष्ठति तत्रैवमर्त्येस्वर्गपातालेषुफलंचोक्तं
शुभाशुभंभद्रांददातीत्यपवादद्वाराप्रयोजनमुक्तंभवति उक्तंच मेषोक्षकौर्प्यमिथुनेघटसिंहमीनकर्केषुचापमृगतौलिसुतासुचंद्रे स्वर्गमर्त्यनागनग
रीक्रमशः प्रयातिविष्टिः फलान्यपिददातिहितत्रदेशे उक्तंचभूपालवल्लभे कर्ककुंभद्वयेभूस्थाकौर्प्येजत्रितयेद्युगा कन्याचापद्वयेचंद्रेभद्रापातालवा

यामेषंत्यघटीत्रयंशुभकरंपुच्छंतथावासरेविष्टिस्तिथ्यपरार्धजाशुभकरीरात्रौचपूर्वार्धजा ४४ कुंभकर्कद्वयेमर्त्येस्वर्गेब्जेजा
त्रयेलिगे स्त्रीधनुर्जूकनक्रेधोभद्रातत्रैवतत्फलं ४५ वाप्यारामतडागकूपभवनारंभप्रतिष्ठेव्रतारंभोत्सर्गवधूप्रवेश
नमहादानानिसोमाष्टके गोदानाग्रयणप्रपाप्रथमकोपाकर्मवेदव्रतंनीलोद्वाहमथातिपन्नशिशुसंस्कारान्सुरस्थापनं ४६

सिनीति ४५ अथकालशुद्धौनिषेध्यवस्तूनिशार्दूलविक्रीडितेनाह वाप्यारामेति वापीदीर्घिका आराम उपवनं तडागपुष्करिणी कूपःप्रसिद्धः
एतेषामारंभप्रतिष्ठा आरंभोनिर्माणं प्रतिष्ठाउत्सर्गः तत्रगृहप्रतिष्ठागृहप्रवेशोज्ञेयः व्रतानामनंतव्रतादीनांआरंभः ग्रहणंउत्सर्गउत्थापनं महा
दानानितुलापुरुषादीनि सोमःसोमयागः अष्टकाअष्टकाश्राद्धं गोदानंकेशांतसंज्ञंकर्म आग्रयणंनवान्नेष्टिः प्रपाजलशाला प्रथमकोपाक
र्मप्रथमारभ्यमाणंश्रावणीकर्म वेदव्रतंमहानाम्न्यादित्रयं महानाम्नीव्रतं उपनिषद्व्रतं वेदव्रतंच नीलोद्वाहः काम्यवृषोत्सर्गः अतिपन्नशिशु
संस्काराः अतिपन्नाः अतिक्रांताः जातकर्मादयः शिशूनांसंस्काराः देवस्थापनं ४६॥ ॥

अथान्यानि शार्दूलविक्रीडितेनाह दीक्षामौंजीति दीक्षा मंत्रग्रहणादिका मौंजिविवाहौ प्रसिद्धौ मुंडनं चौलं अपूर्वदेवेक्षणं तीर्थेक्षणं च सन्यासः प्रसि
द्धः अग्निपरिग्रहोऽग्निहोत्रं अपूर्वराजदर्शनं राजाभिषेकश्च गमागमनं अपूर्वमेव चातुर्मास्यं चातुर्मास्ययागः समावृत्तिर्मौंजीविसर्गः श्रवणयोर्वेधः
कर्णवेधः परीक्षा तप्तमाषादिरूपा दिव्यमिति यावत् एतानि कर्माणि बुधो न कुर्यात् कदा इज्यसितयोर्बृहस्पतिशुक्रयोर्बाल्ये वृद्धत्वे अस्ते च शिशुत्वे वा।
स्ये च तथा न्यूनाधिमासे क्षयमासे अधिमासे च न कुर्यात् अत्र मूलवचनानि शातातपः अस्तंगते गुरौ शुक्रे बाले वृद्धे मलिम्लुचे उद्यापनमुपारंभं
व्रतानां नैव कारयेत् ऋक्षोच्चयः वापीकूपतडागयागगमनं क्षौरं प्रतिष्ठा व्रतं विद्यामंदिरकर्णवेधनमहादानं वनं सेवनं तीर्थस्नानविवाहदेवभव
नमंत्रादि देवेक्षणं दूरेणैव जिजीविषुः परिहरेदस्तंगते भार्गवे उपनयनं गोदानं पाणिग्रहणं गृहप्रवेशागमनानि अस्तमिते शुक्रे न कुर्यात् क्रूरगुरुभृ
गुपुत्रचंद्रेषु अस्तमयादिफलमाह बादरायणः गुरोरस्ते पतिं हन्यात् शुक्रास्ते चैव कन्यकां चंद्रे नष्टे उभौ हन्यात् तस्मादस्तं विवर्जयेत् बालभावे त्रि

दीक्षामौंजिविवाहमुंडनमपूर्वं देवतीर्थेक्षणं संन्यासाग्निपरिग्रहौ नृपतिसंदर्शाभिषेकागमं॥ ॥

यं हन्यात् वृद्धभावे नरं तथा तस्माद्बाल्ये च वार्द्धे च विवाहं नैव कारयेत् अथाधिमासे वर्ज्यानि गृह्यपरिशिष्टे सोमयागादिकर्माणि नित्यान्यपि म
लिम्लुचे तथैवाग्रयणाधानचातुर्मास्यादिकान्यपि महालयाष्टकाश्राद्धोपाकर्माद्यपि कर्म यत् स्पष्टमासविशेषाख्याविहितं वर्जयेन्मले गर्ग
बृहस्पती अग्न्याधानप्रतिष्ठां च यज्ञदानव्रतानि च वेदव्रतवृषोत्सर्गचूडाकरणमेखला मांगल्यमभिषेकं च मलमासे विवर्जयेत् मरीचिः गृहप्र
वेशगोदानस्थानाश्रयमहोत्सवं न कुर्यान्मलमासे तु संसर्पांहस्पतौ तथा वसिष्ठः वापीकूपतडागादिप्रतिष्ठा यज्ञकर्म च न कुर्यान्मलमासे तु संस
र्पांहस्पतौ तथा यदा क्षयमासो भवति तदा क्षयमासस्य पूर्वोत्तरावधिमासौ भवतः तत्र पूर्वः संसर्पः द्वितीयोंऽहस्पतिः एतानि गुरुशुक्रयोरस्तादा
वपि वर्ज्यानीत्याह गार्ग्यः बाले वा यदि वा वृद्धे शुक्रे वास्तंगते गुरौ मलमास इवैतानि वर्जयेद्देवदर्शनं अपूर्वदेवतादृष्टाशुचः॥ ॥

स्फुर्नष्टभार्गवे मलमासेप्यनावृत्तीतीर्थयात्रांविवर्जयेत् अनावृत्ताश्चपूर्वतीर्थयात्रा अत्रनियमकालानिसीमंतनामकरणादीनिपूर्वोदत्तादिसत्वे
पिस्वस्वकालएवकार्याणि गुरुः मासप्रयुक्तकार्येषुमूढत्वंगुरुशुक्रयोः नदोषकृन्मलेमासेगुर्वादित्यादिकंतथा अन्यत्रापि सीमंतजातका
दीनिप्राशनांतानियानिवै नदोषोमलमासस्यमौढ्यस्यगुरुशुक्रयोरिति वसिष्ठः अतीतकालान्यखिलानितानिकार्याणिसौम्यायनगेदिनेशेसिते
गुरौवाप्यदृश्यमानेतदुक्तंपंचांगदिनेप्युक्तंडे अतएवातिपन्नशिशुसंस्कारा इत्युक्तं ४७ अथसिंहमकरस्थगुर्वादिषुनिषेधमाह अस्तेवर्ज्यमिति
यदस्तेगुर्वेस्तेवर्ज्यंनिषिद्धमुक्तंतत्सिंहस्थेगुरौमकरस्थेचगुरौवर्ज्यंनिषिद्धं देवीपुराणेसिंहसंस्थेगुरौयत्नात्सर्वारंभान्विवर्जयेत् पुत्रभ्रातृकलत्राणि
हन्याच्छीघ्रंनसंशयः कारकोब्रजनेनाशंसंतानंम्रियतेऽचिरात् देवारामतडागानिप्रपोद्यानगृहाणिच विवाहयज्ञोपनयनचूडादिचनसिध्यति

चातुर्मास्यसमावृत्तीश्रवणयोर्वेधंपरीक्षांत्यजेद्द्वंत्वाद्यशिशुत्वईज्यसितयोर्न्यूनाधिमासेतथा ४७ अस्तेवर्ज्यंसिंह
नक्रस्थजीवेवर्ज्यंकेचिद्वक्रगेचातिचारे॥ ४८ यथासिंहस्थितोजीवस्तथैवमकरस्थितः अयमपिनिषेधोनियतकालानांनसंग्रहः वसि

ष्ठः नीचराशिगतोजीवः प्रशस्तः सर्वकर्मसुनीचेनीचांशकस्याज्यायस्मादंशेषुनीचता विशेषोमांडव्येनोक्तः देवीपुराणे मकरस्थोयदाजी
वोवर्जयेत्पंचमांशकं शेषेष्वपिचभागेषुविवाहः शोभनोमतः तोडरानंदः अतिचारेसप्तदिनेवक्रेद्वादशमेवच नीचस्थितेपिवागीशेमास
मेकंविवर्जयेत् ज्योतिर्निबंधे हरिनीचारिभागेपिव्रतोद्वाहादिमंगलं ननिषिद्धंयदित्वाचेत्स्वमेवांशस्थितोगुरुः मघात्[illegible]दागच्छेत्फाल्गु
नीचवृहस्पतिः पुत्रिणीधनिनीकन्यासौभाग्यंसुखमश्नुतइति क्वचिदपूर्वतीर्थयात्रायांमौढ्यादिदोषोनास्ति गोदा[illegible]श्रीशैल
ग्रहणद्वये सुरासुरगुरूणांचमौढ्यदोषोनविद्यते वायुपुराणे त्रिस्थलीसेतौ गयायांसर्वका॥ ॥

लेषुपिंडंदद्याद्विधानतः अधिमासेजन्मदिनेह्य स्तेचगुरुशुक्रयोः नन्यक्तव्यंगयाश्राद्धं सिंहस्थेचबृहस्पतौ अधिमासेसिंहगुराववस्तेचगुरुशुक्रयोः
तीर्थयात्रानकर्तव्यागयांगोदावरींविनेति अथगुर्वादित्येयद्वर्ज्यंतद्वक्रगेगुरौअतिचारगेपिगुरौवर्ज्यं वात्स्यः यात्रोद्वाहप्रतिष्ठांचगृहचूडाव्रतादिकं
वर्जयेद्यत्नतस्त्वेवजीववक्रातिचारगे अस्यापवादोराजमार्तंडे वक्रातिचारगेजीवेवर्जयेत्तदनंतरं व्रतोद्वाहादिचूडोयामष्टाविंशतिवासरान्
दीपिकायां त्रिकोणजायाधनलाभराशौवक्रातिचारेणगुरुःप्रयातः यदातदाप्राहशुभंविलग्नंविहायपाणिग्रहणंवसिष्ठः अथकेचिद्गु
रुसहितेआदित्येएकराशिगतेगुरुसूर्यावितियावत् गुर्वादित्येपिसर्वंशुभकर्मवर्ज्यं शौनकः एकराशिगतौसूर्यजीवौस्यातांयदापुनः
व्रतबंधविवाहादिशुभकर्माखिलंत्यजेत् अथकेचिद्विश्वघस्रेपिपक्षे यस्मिन्पक्षेतिथिद्वयनाशः सत्रयोदशदिनःपक्षःसोतिनिंद्यः उक्तं
च पक्षस्यमध्येद्वितिथीपतेतांतदाभवेद्रौरवकालयोगः पक्षेविनष्टेसकलंविनष्टमित्याहुराचार्यवराःसमस्ताः तथा त्रयोदशदिनपक्षे

गुर्वादित्येविश्वघस्रेपिपक्षेप्रोचुस्तद्वद्दंतरत्नादिभूषां ४८

तदासंहरतेजगत् अपिवर्षसहस्रेणकालयोगःप्रकीर्तितइति तस्मिन्पक्षेशुभकर्मवर्ज्यमित्याहुः चंडेश्वरः त्रयोदशदिनेपक्षेविवाहा
दिनकारयेत् गर्गादिमुनयःप्राहुः कृतेमृत्युस्तदाभवेत् उपनयनंपरिणयनंवैश्मारंभादिपुण्यकर्माणि यात्रादिक्षयपक्षेकुर्यान्नजिजीवि
षुःपुरुषः अथतद्वत्तेनप्रकारेणदंतरत्नादिभूषा दंताहस्तिदंतास्तत्संबंधिनीभूषा रत्नसंबंधिभूषांच आदिशब्दात्सुवर्णमणिसंबंधि
नीचभूषांवर्ज्यांप्रोचुः पूर्वस्मिन्निषेधकालेइत्यर्थः राजमार्तंडः यात्राचूडाविवाहंश्रुतिविचरविधिंशंखसद्मप्रवेशंप्रासादोद्यानहर्म्यंसुर
नरभवनारंभविद्याविधानं मौंजीबंधंप्रतिष्ठांमणिकनकरदाधारणंकुर्वतेयेमृत्युः सिंहस्थितेज्येगुरुदिनकरयोरेकराशिस्थयोश्चेति सिं
हस्थगुरोरुपलक्षणत्वात् गुर्वस्तादावपिप्रथमकर्तव्यसुवर्णादिधारणनिषेधइत्यर्थः ४८॥

अथसिंहस्थगुरोः प्रकारत्रयेणपरिहारमुपेंद्रवज्रयाह सिंहेगुराविति अत्रप्रथममंशभेदेनपरिहारः सिंहस्थेगुरौसत्यपिसिंहांशेसत्यंशत्रयो
दशांशे १।२० भ्योनंतरंसत्यंशमंशत्रयं ३।२० पंचमानवांशाः सिंहांशास्तत्रगुरौसतिविवाहोनेष्टः सिंहराशौतुसिंहांशेयदाभवतिवाक्पतिः
सर्वदेशवर्ज्यस्तज्योदंपत्योर्निधनंप्रदद्यादितिराजमार्तंडोक्तेः। अतोवशिष्टांशेषुविवाहादिशुभंभवतीत्यर्थः सिंहेपिभगदैवत्येगुरौपुत्रवतीभवेत्
अन्यंतसुभगासाध्वीधनधान्यसमृद्धिदंपादितत्रैवोक्तेः अथदेशभेदेनद्वितीयपरिहारउच्यते अथगोदोत्तरतः गोदावरीनद्यास्तस्याउत्तरतीरमा
रभ्यभागीरथीयाम्यतटंदक्षिणकूलमथोदीकृत्यगोदावरीगंगांतरालवर्तीयोदेशः तत्रसिंहस्थगुरुर्वर्ज्यः नान्यदेशेलग्नः गोदावर्युत्तरेतीरे
यावद्भागीरथीतटंयाम्यं तत्रविवाहोनेष्टः सिंहस्थेदेवपतिः पूज्ये अथोगोदावरीदक्षिणतटेभागीरथ्युत्तरदेशेचसिंहस्थगुरुदोषोनास्ति वसि

सिंहेगुरौसिंहलवेविवाहोनेष्टोथगोदोत्तरतश्चयावत् भागीरथीयाम्यतटंचदोषोनान्यत्रदेशेतपनेपिमेषे ४९ मघादि
पंचपादेषुगुरुः सर्वत्रनिंदितः गंगागोदांतरंहित्वाशेषांघ्रिषुनदोषकृत् ५० मेषेर्केसन्व्रतोद्वाहेगंगागोदांतरेपिचस
र्वैः सिंहगुरुर्वर्ज्यः कलिंगेगौडगुर्जरे ५१ रेवापूर्वेगंडकीपश्चिमेचशोणस्योदग्दक्षिणेनीचईज्यः॥ ६ ॥ ॥

ष्ठः भागीरथ्युत्तरेकूलेगौतम्यादक्षिणेतथा विवाहोव्रतबंधोवासिंहस्थेज्यानदुष्यतीति अत्रविवाहव्रतबंधावेवननिषिद्धौ आभ्यामन्यानिशुभ
कर्माणिनिषिद्धान्येव अपवादस्यसंकोचाश्रयत्वादुपलक्षणायोगात् अथतृतीयः परिहारः तपनेसूर्येमेषराशौविद्यमानेसतिवासिंहस्थगु
रौदोषोनास्ति ज्योतिर्निबंधे मंगलानीहकुर्वीत सिंहस्थेवाक्पतिर्यदा भानोमेषगतेसम्यगित्याहुः शौनकादयइति ४९ सिंहराशिगत
गुरुनिषेधवाक्यानांप्रतिप्रसववाक्यानांचनिर्गलितार्थमनुष्टुप्द्वयेनाह मघादिपंचपादेष्वित्यादि ५० मेषेर्कइत्यादिचं ५१ अथमक
रस्थगुरोः प्रकारद्वयेनपरिहारशालिन्याह रेवापूर्वइति रेवायाः नर्मदायाः पूर्वदेशे गंडकीनद्याः पश्चिमेविभागेशोणनदस्यउत्तरदक्षिण।

भागेनीचर्ईज्यःमकरस्थगुरुर्नवर्ज्यः तत्र नर्मदापूर्वभागेतुशोणस्योत्तरदक्षिणे गंडक्याःपश्चिमेभागेमकरस्थोनदोषभाक् अन्यदेशेषुनिषिद्धस्तत्र
निषिद्धदेशानाह अयमिति अयंमकरस्थगुरुः कोंकणदेशेगौडदेशेसिंधुदेशेचशुभकृत्येषुवर्ज्योनिषिद्धः उक्तंच मागधेगौडदेशेचसिंधुदेशे
चकोंकणे व्रतंचूडांविवाहंचवर्जयेन्मकरेगुरौ एभ्योन्यदेशेषुमंगलमर्थान्मध्यमं ५२ अथलुप्तसंवत्सरदोषंसापवादंवंशस्थवृत्तेनाह गोजं॥
त्येतिगोवृषः अजोमेषः अंत्योमीनः कुंभः प्रसिद्धः एष्वष्टतरभे अन्यराशौमिथुनादौअतिचारगोगुरुः महातिचारेणसमागतःसन्पश्चा
त्कियद्भिर्दिनैः वक्रितः यदापूर्वराशिंनोएतिमुक्तराशिंनोएतिनागच्छतितदा विलुप्ताब्दः लुप्तसंवत्सरउच्यते सलुप्तसंवत्सरःशुभकृत्येअति
निंदितः निषिद्धः उक्तंच अतिचारगतोजीवस्तंराशिंनैतिचेत्पुनः लुप्तःसंवत्सरोज्ञेयोगर्हितःसर्वकर्मसु यदातु गोजांत्यकुंभेषुपूर्वराशेः सका

वर्ज्योनायंकौंकणेमागधेचगौडेसिंधौवर्जनीयःशुभेषु ५२ गोजांत्यकुंभेतरभेतिचारगेनोपूर्वराशिंगुरुरेतिवक्रितः॥
तदाविलुप्ताब्दइहातिनिंदितःशुभेष्वरेवासुरनिम्नगांतरे ५३ पादेनरेवापरपूर्वयोजनैः पलैर्युतोनास्तिययोर्दिनार्धतः॥

शान्महातिचारेणायातिपूर्वराशिंचनैतितदालुप्तसंवत्सरदोषः गुरुः मेषवृषमेषकुंभेष्वतीचारेणगुरुः नतत्रकाललोपःस्यादित्याह
भगवान्यमः दशमासभोगानंतरमतीचारेपिलुप्ताब्ददोषोनास्ति च्यवनः मासान्दशैकादशवाप्रभुज्यराशेर्यदाराशिमुपैतिजीवः भुक्तेनपू
र्वेचपुनस्तथापिनलुप्तसंवत्सरमाहुरार्याः पूर्वराशिभेदेनपरिहारमुक्त्वेदानींदेशभेदेनपरिहारमाह सलुप्तसंवत्सरोरेवानर्मदासुरनिम्नगाभागी
रथीतयोर्नद्योरंतरेऽतिनिषिद्धः उक्तंच लुप्ताब्ददोषोत्रिमतेनमध्येसोमोद्भवायाः सुरनिम्नगायाः इतिनारदेनसमस्तकदोषोविवाहेवर्जितः
समस्तदेशेर्गुरोः शुक्रस्तन्मासेतुप्रयत्नतः विवाहादिनकुर्वीतनर्मदातीरउत्तरे ५३ अथवारप्रवृत्तिमुपजात्याह पादेनेति रेवाभूमध्यरेखापु
रीरक्षसीदेवकन्याथकांचीन्याद्युक्ता लंकातआरभ्यसुमेरुमस्तकदत्तसूत्राधोवर्तिदेशास्तेमध्यरेखाशब्देनोच्यंते ॥

ने यस्मिन्देशे वारप्रवृत्तिश्चिकीर्षिता सदेशो रेखातः प्राक्पश्चिमे यावंति योजनानि भवंति तानि स्वचतुर्थांशोनानि कृत्वा तावद्भिः पलैः तिथ्यः पंचदश घ
टिकायुक्तोनाः कार्याः यदा मध्यरेखातः प्रत्यग्योजनानि तदायुक्ताः यदा तु प्राग्योजनानि तदोनाः कार्याः अथ यद्दिने वारप्रवृत्तिरिष्टा तद्दिवसे यद्दि
नार्धं चरपलयुतहीनानाडिका पंचचंद्राद्इत्यादि प्रकारसिद्धं तस्माद्दिनार्धात्संस्कारविशिष्टाः पंचदशऊनाधिकाश्चेद्भवंति तदा तद्दिवसोद्भवैः पलैः
र्दिनार्धसंस्कारविशिष्टपंचदशानां च यद्विवरं अंतरं तत्संबंधेनोत्थैः स्वल्पैः पलैरूर्ध्वं तथाधो दिनपस्य वारस्य प्रवेशः यदा संस्कारविशिष्टाः पं
चदश दिनार्धतश्चेदूनास्तु तदा सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा संस्कारविशिष्टाः पंचदश दिनार्धतोऽप्यधिकास्तदा सूर्योदयात्प्राक् वारप्रवृत्तिरि
त्यर्थः यथा वाराणसी रेखाभिधानात् कुरुक्षेत्रात्प्राक् त्रिषष्टियोजनानि ६३ पादोनचतुर्थांशेनोनानि ४७।१५ प्राग्योजनत्वादेतैः पलैरूनाः
पंचदशघटिका जाताः १४।१३ दिनार्धं १६।३० अस्मान्न्यूना इति विवरं २।१७ तैर्नाभिर्घटीभिः सूर्योदयादूर्ध्वं वारप्रवृत्तिः यदा दिनार्धं १३।५० अ

ऊनाधिकास्तद्दिवसोद्भवैः पलैरूर्ध्वं तथाधो दिनपप्रवेशनं ५४ वारादेर्घटिकाद्विघ्नाः स्वाक्षहृच्छेषवर्जिताः सैकास्तष्टा नगैः का

स्मादधिका इति विवरं ०।२३ एताभिर्घटीभिः सूर्योदयात्प्राक् वारप्रवृत्तिरित्यर्थः ५४ अथ वारप्रवृत्तिप्र॥ लहोरेशादिनयात्क्रमात् ५५॥
योजनपुरः सरं काल होरामनुष्टुभाह वारादेरिति वारप्रवृत्तिप्रकारेण यस्मिन्क्षणे वारप्रवृत्तिर्जाता ततः इष्टघट्यो द्विगुणाः कार्याः तद्धि स्थाने स्थाप्याः
तत्र पंचभिर्भक्ते यल्लब्धं तत्त्याज्यं यच्छेषं तद्द्विगुणघटीमध्ये वर्जितं कार्यं एवंविधा घट्यः सैका एकयुक्ताः कार्याः सप्तभिस्तष्टाश्च वशिष्टाः कालहोरेशाः
स्युः ते दिनपात्वारात्क्रमाद्गणनीयाः यथा रविवारे इष्टघटिकाः ६ द्विगुणाः १२ पृथगक्षा ५ तष्टशेष २ वर्जिताः १० सैका ११ नगैः ७ तष्टाशेषं ४ रवि
वारे क्रमाद्गणनया च तुर्थो बुधस्तस्य होरा इत्यादि विवाहवृंदावने उदयमारभ्य होरा उक्ताः यथा तत्कालार्कन्यूनलग्नांशपिंडोभक्तः पंचखाग्निभिर्भुक्त
होराः भास्वच्छुक्रेंदुसौरेज्यभौमाः संख्यायेत्वारतत्तेन दीशाइति अनयोर्विषयविभागो वसिष्ठसंहितायां वारप्रवृत्तिविज्ञानं क्षणवारार्थमेवहि अवि
लंब्यकार्येषु दिनोदिरहृदयाद्भवेत् क्षणवारः कालहोरारूपः तदर्थं वारप्रवृत्तिः अन्यकार्येषु दिक्शूलादिषु तिथिवारप्रयुक्तेषु वा योगेषु सूर्योदयादेव

अथकालहोराप्रयोजनं शालिन्याह वारेप्रोक्तमिति यत्कर्मयस्मिन्वारेप्रोक्तं तद्दिनस्यसदोषत्वादत्यावश्यकत्वेनतस्यकालहोरायांकर्त्तव्यं नारदः यस्ययखेटस्ययत्कर्मवारेप्रोक्तं विधीयते ग्रहस्यक्षणवारेपितस्यतत्कर्मसर्वदा अत्रकेचित् यस्यवारेकर्मप्रोक्तंतस्यबलिनोरवेर्वाशेषस्यचन्द्रवाचेतिष्ठ तितदातत्कर्मकार्यमित्याहुः उक्तंच यस्यग्रहदिनेकर्मयत्किंचिदभिधीयते यस्यांशसंस्थितेचंद्रेसूर्येवातद्विधीयतेइति अथधिष्ण्येस्वस्यचेयत्कर्म वस्त्रपरिधानादिकमुक्तंतदत्यावश्यकत्वेअस्यधिष्ण्यस्यस्वामितिथ्यंशकेस्वामिनोमुहूर्त्तेकुर्यात् नारदः यस्मिन्नृक्षेतुयत्कर्मनिखिलंकथितंबुधैः तत् दैवत्येतन्मुहूर्त्तेकार्ययात्रादिकंनयेति मुहूर्त्तस्वामिनोविवाहप्रकरणेवक्ष्यंते क्षणेषुमुहूर्त्तेषुदिक्शूलाद्यंदिक्शूलवारशूलनक्षत्रशूलंचिंत्यं विचारणीयं एवंपारिघोदंडः क्षणेषुमुहूर्त्तेषुनैवोल्लंघ्यः दिक्शूलादिकमखिलंपारिघदंडादिविज्ञेयमितिवसिष्ठोक्तेः ५६ अथमन्वादीन्युगादींश्चशार्दूल

वारेप्रोक्तंकालहोरासुतस्याधिष्ण्येप्रोक्तंस्वामितिथ्यंशकेऽस्य कुर्याद्दिक्शूलादिचिंत्यंक्षणेषुनैवोल्लंघ्यःपारिघाख्योपिदंडः ५६
मन्वाद्यास्त्रितिथीमधोर्तिथिरवीऊर्जेशुचौदिक्तिथीज्येष्ठेंत्येचतिथिस्त्विषेनवतपस्यश्वाःसहस्येशिवाः भाद्रेग्निस्त्वसितेनभ
स्तनभसः कृष्णेयुगाद्याःसितेगोग्नीबाहुलराधयोर्मदनदर्शौभाद्रमाघासिते ५७॥ विक्रीडितेनाह मन्वाद्याइतिसितेशुक्लपक्षेएतामन्वाद

यः मधौचैत्रेत्रितिथीतृतीयापौर्णिमे ऊर्जेकार्त्तिकेतिथिरवीपूर्णिमाद्वादश्यौ शुचौआषाढेदिक्तिथीदशमीपूर्णिमे ज्येष्ठेअंत्येफाल्गुनेचतिथिःउभ यत्रपूर्णिमेव।इषेआश्विनेनवमी तपसिमाघेअश्वाः सप्तमीसहस्येपौषेशिवाएकादशी भाद्रपदेअग्निस्तृतीयातुइतिपुनः नभसः श्रावणस्यकृष्णप क्षेअमावास्याअष्टमी अथयुगाद्याश्चत्वारः बाहुलराधयोः बाहुलःकार्त्तिकः राधोवैशाखः तयोःशुक्लपक्षेगोग्नीनवमीतृतीयेयुगादि कार्त्तिकशु क्लनवमीकृतयुगादिः वैशाखशुक्लतृतीयात्रेतादिःभाद्रमाघासितेमदनदर्शौयुगादि मदनस्त्रयोदशी दर्शोअमावास्या भाद्रकृष्णत्रयोदशीकलियुगादिः माघकृष्णअमावास्याद्वापरादिः अत्रशुक्लादयोमासाग्राह्याः कार्त्तिकेशुक्लनवमीचादिःकृतयुगस्यसात्रेतादिर्माधवेशुक्लातृतीयापुण्यसमिता कृष्णापंच दशीमाघेद्वापरादिरुदीरिता कल्यादिःस्यात्कृष्णपक्षेनभस्येवत्रयोदशीतिनारदोक्तेः ५७॥ इतिश्रीदैवज्ञानंतसुतदैवज्ञविरचितायांस्वकृतमुहूर्त्तचिंतामणौ

॥ अथ नक्षत्रप्रकरणं व्याख्यायते तत्रादौ नक्षत्रस्वामिनः शार्दूलविक्रीडितेनाह नासत्येति एते नासत्यान्तकादयः भेशा नक्षत्रेशाः क्रमात्स्युः
१ अथ ध्रुवनक्षत्राणि तत्कृत्यं चानुष्टुभाह उत्तरात्रयेति उत्तरात्रयं रोहिणी च एतानि नक्षत्राणि रविवारश्च ध्रुवसंज्ञानि स्थिरसंज्ञानि चेति संज्ञाद्वयं
एवमुत्तरत्रापि व्याख्येयं ध्रुवनक्षत्रेषु स्थिरादिकर्म कार्यं आदिग्रहणान्मृदुनक्षत्रोक्तं ग्राह्यं वसिष्ठः मृदुध्रुवे कथितान्यपि स्थिरवृंदे तानि का॥
र्याणि इति २ अथ चरभानि तत्कृत्यं चानुष्टुभाह स्वात्यादित्येति आदिशब्दात् लघुनक्षत्रोक्तमपि ३ अथोग्रनक्षत्राणि चानुष्टुभाह पूर्वात्रयमि

नासत्यांतकवह्निधातृशशभृद्रुद्रादितीज्यारगाक्षेशाः पितरोर्भगोर्यमरवीत्वष्टासमीरः क्रमात् शक्राग्नी खलु मित्रइंद्रनिर्ऋति
क्षीराणि विश्वे विधिर्गोविंदो वसुतोयपाजचरणाहिर्बुध्न्यपूषाभिधाः १ उत्तरात्रयरोहिण्यो भास्करश्च ध्रुवं स्थिरं तत्र स्थिरं बी
जगेहशांत्यारामादिसिद्धये २ स्वात्यादित्ये श्रुतेस्त्रीणि चंद्रश्चापि चरं चलं तस्मिन्गजादिकारोहो वाटिकागमनादिकं ३
पूर्वात्रयं याम्यमघे उग्रं क्रूरं कुजस्तथा तस्मिन्घाताग्निशाठ्यानि विषशस्त्रादि सिध्यति ४ विशाखाग्नेयभे सौम्यो मिश्रं
साधारणं स्मृतं तत्राग्निकार्यं मिश्रं च वृषोत्सर्गादिसिद्धये ५ हस्ताश्विपुष्याभिजितः क्षिप्रं लघु गुरुस्तथा तस्मिन्पण्यर
तिज्ञानभूषाशिल्पकलादिकं ६ मृगांत्यचित्रामित्रर्क्षं मृदु मैत्रं भृगुस्तथा तत्र गीतांबरक्रीडामित्रकार्यविभूषणं ७
मूलेंद्रार्द्राहिभं सौरीतीक्ष्णं दारुणसंज्ञकं तत्राभिचारघातोग्रभेदाः पशुदमादिकं ८॥ ० ॥ ॥

ति आदिशब्दाद्दारुणनक्षत्रोक्तमपि ४ अथ मिश्राण्यनुष्टुभाह विशाखेति आदिग्रहणादुग्रोक्तमपि ५ अथ लघुनक्षत्राण्यनुष्टुभाह
हस्तेति शिल्पं वर्धकिविकृत्यादि कलानृत्यादिका चतुःषष्टिः आदिशब्दाच्चरोक्तमपि ६ अथ मृदुनक्षत्राण्यनुष्टुभाह मृगांत्येति ७ अ
थ तीक्ष्णान्यनुष्टुभाह मूलेति अभिचारः कर्माणं भयंकरकृत्यं मारणादि पशुदमः पशुशिक्षा आदिशब्दात् बंधनादिकं स्थिरं च ८ ॥

अथाधोमुखोर्ध्वमुखतिर्यङ्मुखनक्षत्राणीन्द्रवज्रयाह मूलाहीति मूलं आहिमाश्लेषा मिश्रं कृत्तिकाविशाखे उग्रं पूर्वात्रयमघाभरण्यः एतानिन
वभानि अधोमुखानि ज्ञेयानि आर्द्रापुष्यः श्रवणत्रयं रोहिण्युत्तरात्रयं च नवभान्यूर्ध्वमुखानि मैत्राणि चित्रारेवत्यनुराधाः हस्तस्वाती पुनर्वसुज्ये
ष्ठाश्विनी एतानि नवभानि तिर्यङ्मुखानि एषु अधोमुखोर्ध्वमुखतिर्यङ्मुखेषु भेषु इह शं कृत्यं अधोमुखोर्ध्वमुखतिर्यक्मुखकृत्यं सत् भवति ग
रुडपुराणे भरणीकृत्तिकाश्लेषामघामूलविशाखिकाः तिस्रः पूर्वास्तथा चैव अधोवक्त्राः प्रकीर्तिताः एषु वापीतडागादि कूपभूमितृणानि च दे
वागारस्य खननं निधानखननं तथा गणितं ज्योतिषारंभं खनी बिलप्रवेशनं कुर्यादधोगतान्येव कार्याणि वृषभध्वज रोहिण्यार्द्रा तथा पुष्यो धनि
ष्ठा चोत्तरात्रयं वारुणं श्रवणं चैव नव चोर्ध्वमुखास्तथा एषु राज्याभिषेकं च पट्टबंधं च कारयेत् ऊर्ध्वमुखान्युच्छ्रितानि सर्वाण्येषु च कारयेत् रे

मूलाहिमिश्रोग्रमधोमुखं भवेदूर्ध्वास्यमार्द्रेज्यहरित्रयध्रुवं तिर्यङ्मुखं मैत्रकरानिलादितिज्येष्ठाश्विभानीदृ
शकृत्यमेषु सत् ९ पौष्णध्रुवाश्विकरपंचकवासवेज्यादित्ये प्रवालरदशंखसुवर्णवस्त्रं ॥ ॥ ९ ॥ ॥

वतीचाश्विनी चित्रास्वाती हस्तः पुनर्वसुः अनुराधा मृगो ज्येष्ठा एतास्तिर्यङ्मुखाः स्मृताः गजोष्ट्राश्वबलीवर्ददमनं माहिषस्य च बीजानां
वपनं कुर्याद्गमनागमनादिकं चक्रयंत्ररथादीनां नावादीनां प्रवाहणं पार्श्वेषु यानि कार्याणि कुर्यादेषु च तान्यपि इदं च नक्षत्रविशेषविहिता
नां कर्मणामावश्यकर्त्तव्यत्वे मुहूर्तोलब्धोऽसन्यां कर्मणः अधोमुखाद्याकारं ज्ञात्वा तत्तन्नक्षत्रेषु तानि कर्माणि कार्याणि यानि च सर्वथा नोक्तानि
बिलप्रवेशादीनि तान्यधोवनक्षत्रेषु कार्याणीत्येतदर्थमुक्तं ९ अथ प्रवालादिधारणमुहूर्तं वसंततिलकेनाह पौष्णध्रुवेति रेवत्यादिनक्षत्रे
षु तथा रिक्तातिथिशनिचंद्रभौमवर्जिते ह्रि दिवसे प्रवालं विद्रुमं शंखः शंखवलयादि वाजस्वेतं एतानि धार्याणि रक्तं मंजिष्ठादिरंगेन रंजि
तं वस्त्रं भौमवारेपि धार्यं अथ सुभगा सभर्तृका ध्रुवादितियुगरोहिण्युत्तरात्रयेषु अदिति युगे पुनर्वसौ पुष्ये च प्रवालादि ॥ ॥

कंनद्ध्यात् क्वचिद्भूततारायांस्नानमपिनिषिद्धं उक्तंच रोहिणीगुरुपुनर्वसूत्तरेयाबिभर्तिनववस्त्रविभूषणं सानयोषिदवलंबतेपतिंस्नान।
माचरतिवारुणेपियाइति १० अथनवधाविभक्तस्यवस्त्रस्यदग्धादिदोषेशुभाशुभफलंशार्दूलविक्रीडितेनाह वस्त्राणामिति वस्त्राणांनव
भागाः कार्याः कोणचतुष्टयेअमरादेवाः स्थाप्याः।राक्षसामध्यगतांशगतानेयाः नराः दशासदिते पाशेच पुनर्मध्ययोरंशयोर्ज्ञेयाः तत्रचेद्व
स्त्रांशेनवतरेनूतनेवस्त्रेदैवाद्दग्धेअग्निस्पृष्टे।स्फुटितेपाषाणाद्याघातादिभिर्निहते पंकेनकर्दमेन आदिशब्दात् गोमयादिभिरुपहतेस
तितद्वस्त्रंनसत्शुभफलजनकंनभवतीत्यर्थः नृसुरांशयोः एवंवस्त्रदाहादिकेसतिशुभंकल्याणंस्यात् अथसर्वांशकेराक्षसमनुष्यदेवांशके
षुप्रांततः प्रांतभागेअत्यनिष्टफलगमकं इदंसर्वंशय्यापादुकासनेष्वपितेयं श्रीपतिः कज्जलकर्दमगोमयलिप्तेवासस्विदग्धवतिस्फुटितेच

धार्यंविरिक्तशनिवंद्रकुजेष्विरक्तंभौमेध्रुवादितियुगेसुभगानदध्यात् १० वस्त्राणांनवभागकेषुचचतुःकोणेमरा
क्षसामध्यत्र्यंशगतानरास्तुसदशेपाशेचमध्यांशयोः दग्धेवास्फुटितेंबरेनवतरेपंकादिलिप्तेनसन्नृसांशेनृसुरांश
योः शुभमसत्सर्वांशकेप्रांततः ११ विप्राज्ञयातथोद्वाहे राज्ञा प्रीत्यार्पितंचयत्॥

॥चिंत्यमिदंनवधाविहितेस्मिन्निष्टमनिष्टफ
लंचसुधीभिः अत्रांशसंस्थैध्वजछत्रादिसदृशीछेदाकृतिशुभफलाज्ञेया देवमनुष्यांशेपिकाकोलूकसदृशीछेदाकृतिरशुभफलदा कस्य
पः शरवक्त्राबुजछत्रध्वजतोरणसन्निभा।श्रीवत्ससर्वतोभद्रनंद्यावर्तगृहोपमा वर्धमानस्वस्तिकेभभृंगकूर्मेशषाकृतिः छेदाकृतिर्दैत्यभा
गेप्यायुरर्थप्रदान्नृणां खरोष्ट्रोलूककाकादिजंबूकश्वरूकोपमा त्रिकोणःस्यात्कृतयोर्देवभागेप्यशोभनाः निंदितंवसनंदद्याद्विजेभ्यःस
र्णसंयुतं आशिषोवाचनंकृत्वातन्यद्वस्त्रंचधारयेदिति ११ अथनक्षत्रविहितदिनेपिवस्त्रपरिधानमनुष्टुभाह विप्राज्ञयेति धिष्ण्येनस
त्रैवारादौवारतिथियोगादौव्यतीपातभद्रादिदुष्टयोगेनिषिद्धेपि॥

यद्वस्त्रंब्राह्मणानुज्ञयातथोद्वाहेराज्ञासंतोषेणार्पितंदत्तंतद्वस्त्रंधार्यमितिबुधाजगुः १२ अथलतापादपारोपणराजदर्शनमद्यगोविक्रयमुहूर्तो
नृशार्दूलविक्रीडितेनाह एधामूलेति एधाविशाखाएतदादिचतुर्दशनक्षत्रैर्लतानांवल्लीनांपादपानांवृक्षाणांचारोपोवापनः कार्यः अथराज
दर्शनं ध्रुवमृदुक्षिप्रश्रवोवासवैः त्रयोदशभैः कार्यं अथमद्यमद्यारंभः तीक्ष्णोग्रांबुपभेषुनवनक्षत्रेषुउदितःकथितः अथगवांक्रयोमूल्ये
नपरस्माद्ग्रहणं विक्रयोमूल्यग्रहणपूर्वकंदानं क्षिप्रांत्यवह्नीदुभादित्येंद्रांबुपवासवेषुहिनवनक्षत्रेषुशस्तःप्रशस्तः अत्रभौमपराक्रमेणपं
चदशभान्यभिहितानि हस्तेज्याधात्रितयेसपौष्णेमृगेचपूर्वाश्विविशाखभेषु पुष्येधनिष्ठाहितयेदितीशेगवांक्रयंविक्रयमामनंतीति १३ आ
यपशूनांरक्षामुहूर्तंस्थितिनिवेशनिवेशमुहूर्तंचेंद्रवज्रयाह लग्नेशुभइति शुभेशुभस्वामिकेलग्नेअष्टमशुद्धिसंयुतेशुभपापाक्रांताष्टमभा

निंद्येपिधिष्ण्येवादौवस्त्रंधार्यंजगुर्बुधाः १२ एधामूलमृदुध्रुवसेवहणक्षिप्रैर्लतापादपारोपोथोनृपदर्शनंध्रुवमृ
दुक्षिप्रश्रवोवासवैः तीक्ष्णोग्रांबुपभेषुमद्यमुदितंक्षिप्रांत्यवह्नीदुभादित्येंद्रांबुपवासवेषुहिगवांशस्तःक्रयोविक्रयः
१३ लग्नेशुभेचाष्टमशुद्धिसंयुतेरक्षापशूनांनिजयोनिभेचरे रिक्ताष्टमीदर्शकुजश्रवोध्रुवत्वाष्ट्रेषुयानंस्थितिवेश
॥नंनसत् १४

वरहितेसतिपशूनांरक्षारक्षणंप्रवेशादिकंचसत् तथास्वीययोनिनक्षत्रेचरभेचसत् यथाऽश्वानांयोनिभंअश्वि
नीशततारके तत्रचतुष्पदानांरक्षाशाला तीक्ष्णेपशूनांदमनंवरंस्यात्पशुपोषणमितिवचनात् अथरिक्ता ४।९।१४ अष्टमी ८ दर्शोमावास्या
कुजोभौमः श्रवः श्रवणं ध्रुवाण्युत्तरात्रयरोहिण्यः त्वाष्ट्रंचित्राएषुपशूनांयानंगृहाद्बहिर्निःसारणंस्थितिगोष्ठादिवेशनंनसत् शुभंन व्य
वहारेत्रये पूर्वात्रयेधनिष्ठेंद्रपौष्णसौम्यविशाखायोः आश्लेषायामथाश्विन्यांयात्रासिद्धिंचतुष्पदामिति १४॥
मा

एम.

अथौषधसेव्यमुहूर्तं मंदाक्रांतयाह भैषज्यं सदिति भैषज्यं औषधं प्रारब्धं भक्षितं च सत् लघु॥ इचरनक्षत्रे मूले च द्व्यंगलग्ने द्विस्वभावराशिषु मिथु
नकन्याधनुर्मीनेषु लग्नगतेषु सत्सु शुक्रेंदीज्यबुधेषु द्विस्वभावलग्नस्थेषु सत्सु च पुनर्लग्नांशशुद्धेंदौ ज्यबुधानां रवेश्च दिवसे वारे सत्तिथौ रिक्तामारहि
ततिथौ भैषज्यं सत् शुभं स्यात् दीपिकायां द्व्यंगोदये गुरुबुधेंदुसिते प्रशस्ते तेषां रवेश्च सुविधौ सुतिथौ सुयोगे भेषूग्रपन्नगविशाखशिवेतरेषु जन्मभे
विष्टिरहितेषु कृतः शुभाय इति अथरिःफद्युनमृतिगृहे लग्नात् द्वादशसप्ताष्टमगृहेषु शुद्धेषु शुभपापग्रहरहितेषु सत्सु औषधं तु वर्षफलप्रश्नादि
नाश्चायुर्निश्चये च सत् द्यूनशत्रुनिधनव्ययशुद्धौ सत्स्वहेषु नितरां बलवत्सु आयुषश्च हितकारिणि योगे कीर्तितानियतमौषधसेवेति श्रीपतिभट्टोक्तेः
अथजनने भे जन्मनक्षत्रे नो भैषज्यं सत् जन्मनक्षत्रगश्चंद्रः प्रशस्तः सर्वकर्मसु सौरभेषजवादाध्वकेतनेषु विवर्जयेदिति वचनात् अथ सूचीक

भैषज्यं सल्लघुमृदुचरे मूलभे द्व्यंगलग्ने शुक्रेंदौ ज्ये विदि दिवसे चापि तेषां रवेश्च शुद्धे रिःफद्युनमृतिगृहे सत्तिथौ नो जनेर्भे सूची
कर्माप्यदितिवसुभैर्वा पूष्णमित्राश्विपुष्ये ॥ २५ ॥ क्रयर्क्षे विक्रयो नेष्टो विक्रयर्क्षे क्रयोऽपि न पौष्णांबुपाश्विनीवातःश्रवश्चित्राः क्रये शुभाः ॥ २६ ॥

भेसूच्याः संबंधिकर्म घटनसीवनादि अदितिवसुभत्वाष्ट्रमित्राश्विपुष्यनक्षत्रे सत्स्यात् व्यवहारोच्चये अदितिर्वासवंत्वष्टा मैत्रभं दस्रवाजिनः सू
चीकर्मतन्तुत्राणमेभिर्भैः प्रशस्यत इति २५ अथान्यदप्युपभाह क्रयर्क्ष इति क्रयर्क्षे वक्ष्यमाणक्रयनक्षत्रे विक्रयो न कार्यः तथा विक्रयनक्षत्रे क्रयो
पि न कार्यः दीपिकायां यमाहिशक्राग्निविशाखपूर्वा नेष्टाः क्रये विक्रयणे तु शस्ताः पौष्णाश्विचित्राशतविष्णुवाताः शस्ताः क्रये विक्रयणे निषिद्धा इति
ननु यदायेन क्रयः कर्तव्यस्तदा अन्येन विक्रयः कर्तव्यस्तत्र क्रयविक्रयनक्षत्राणां महाभेदादुभयविधमुहूर्तानुपपत्तिः उच्यते विक्रेता यदा मुहूर्तं विक्रया
र्थं गृह्यते तदा वस्तु पृथक् क्रियते तत्कर्म विक्रयशब्दवाच्यं यदा क्रयिणा क्रयार्थं मुहूर्तः प्रार्थ्यते तदा विक्रेत्रे मूल्यद्रव्यं दत्वा पृथक्कृतं विक्रेतृवस्तु ग्राह्यं तत्क्र
यशब्दवाच्यमिति मत्वा यथा कथंचित्समाधेयं तत्र क्रयमुहूर्तः रेवती शततारा अश्विनी स्वाती श्रवण चित्रा एतानि भानि क्रये शुभानि विक्रयणे निषिद्धानि च

अथविक्रयविपण्योर्मुहूर्तंशार्दूलविक्रीडितेनाह पूर्वाद्रीशेतिद्वीशंविशाखा पूर्वादिननक्षत्रेषु केंद्रेषुप्रथमचतुर्थसप्तमदशमेषुद्वितीयेकोणेनवपं
चमेशुभैःसद्भिः षट्त्र्यायेषुपापग्रहैःसद्भिः घटतनुंकुंभलग्नंविनान्यत्कासत्तिथौरिक्तामारहिततिथौविक्रयःसन्शुभोत्तमः अथविपणिः
पण्यवीथिकागृहेस्थित्वाक्रयविक्रयात्मककर्मरिक्तातिथिभौमवारकुंभलग्नानिवर्जयित्वान्येषुतिथिवारलग्नेषुमित्राणिमृगरेवतीचित्रानुरा
धाःध्रुवाणिरोहिण्युत्तरात्रयंक्षिप्राणिहस्ताश्विपुष्याःएतैर्भैःलग्नेचंद्रेस्थितेमूर्तौचंद्रेसितेषुसतिव्ययाष्टरहितैःपापग्रहैःसद्भिःशुभैर्द्व्यायखे
द्वितीयैकादशदशमेषुसद्भिर्विपणिःशुभास्यात् १७ अथाश्वगजमुहूर्तमिंद्रवज्रयाह क्षिप्रांत्येति क्षिप्रादिनक्षत्रेषुरिक्ताभौमव्यतिरिक्तदिने
वाजिकृत्यमश्वानांक्रयविक्रयशिक्षास्थानाभरणादिकार्यंप्रशस्तंस्यात् श्रीपतिः पुष्यश्रविष्ठाश्विनसौम्यभेषुपौष्णानलादित्यकराह्वयेषु सवारुणर्क्षे

पूर्वाद्रीशकृशानुसार्पयमभेकेंद्रत्रिकोणेशुभैः षट्त्र्यायेष्वशुभैर्विनाघटतनुंसन्विक्रयःसत्तिथौ रिक्ताभौमघटान्विनाच
विपणिर्मित्रध्रुवक्षिप्रभैर्लग्नेचंद्रसितेव्ययाष्टरहितैः पापैः शुभैर्द्व्यायखे १७ क्षिप्रांत्यवस्विंदुमरुज्जलेशादित्येष्वरिक्तार
दिनेप्रशस्तं स्याद्वाजिकृत्यंत्वथहस्तिकृत्यंकुर्यान्मृदुक्षिप्रचरेषुविद्वान् १८ स्याद्भूषाघटनंत्रिपुष्करचरक्षिप्रध्रुवैरत्नयुक्तौ
स्वोग्रविहीनभेऽर्ककुजेमेषालिसिंहेतनौ॥ सुबुधैः स्मृतानिसर्वाणिकार्याणितुरंगमाणां अश्वारोहणेचक्रं अश्वाकारंलिखेच्चक्रंसाभि
जिद्भानिविन्यसेत् स्कंधेतुत्रयंभानांचपृष्ठेचदशभानिच पुच्छेद्वंस्थापयेन्मात्रश्वतुष्पादेचतुष्टयं उदरेविन्यसेत्पंचमुखेद्वेतुरगस्यच अर्थलाभोमु
खस्थस्यकुवाजीनश्यतिचोदरे चरणस्थेरणेभंगःपुच्छेपत्नीविनश्यति अर्थेसिद्धिर्भवेत्पृष्ठेस्कंधेस्कंधपतिर्भवेत्इति अथविद्वान्ज्ञानामृदुक्षिप्र
चरनक्षत्रेषुरिक्तामाभौमवर्जितदिनेचहस्तिकार्यंगजानांकार्यंक्रयविक्रयभूषादिकुर्यात् वसिष्ठः हस्तत्रयेसौम्यहरित्रयेचपौष्णद्वयेपुष्यपुनर्वसौ
च मैत्रेचसर्वाण्यपिकुंजराणांकर्माणिशस्तान्यखिलानियानीति १९ अथभूषणघटनमुहूर्तंशार्दूलविक्रीडितेनाह स्याद्भूषेति त्रिपुष्करदिनेलग्

णंभद्रातिथौ रविजेत्यादिनावक्ष्यति एवंविधेत्रिपुष्करदिने चरक्षिप्रध्रुवनक्षत्रेषु भूषाघटनं आभरणघटनं शुभं स्यात् वसिष्ठः क्षिप्राचलचरऋक्षे
रिक्तामावर्जितेबुधदिवसेषु निखिलेष्वपि वारेष्वपि त्रिपुष्करे भूषणं कार्यं अथ तद्भूषणं रत्नयुक्तं माणिक्यादियुतं चेत्तदा तीक्ष्णोग्रविहीनभेनतीक्ष्णानि मू
लज्येष्ठाऽऽर्द्राश्लेषाख्यानि उग्राणि पूर्वात्रयमघाभरण्यः एतद्व्यतिरिक्ते षष्ठादशनक्षत्रेषु तथा रविभौमवारेपि कार्ये तथा मेषवृश्चिकसिंहल
ग्नेषु च वसिष्ठः स्थिरसाधारणचरक्षेषु भौमे मेषार्ककुजवारे तेषामेव विलग्ने माणिक्यमयभूषणं कार्यमिति कर्कवृषतुलालग्नेषु कार्यमित्य
पि ज्ञेयं वसिष्ठः क्षिप्रमृदुध्रुवचरभेशशांकसितयोर्वासरेषु तल्लग्ने मुक्ताफलरजतमयं भूषणमखिलं सवज्रकं कार्यं अथ तीक्ष्णानि मूलज्येष्ठा
र्द्राश्लेषाः उग्राणि पूर्वात्रयभरणीमघा अश्विनी मृगो द्विदैवं विशाखा दहनः कृत्तिका एषु नक्षत्रेषु घटितं शस्त्रं शुभं स्यात् अदितिवासवत्वष्ट्र

तन्मुक्तासहितं चरध्रुवमृदुक्षिप्रेषु भेसत्तनौ तीक्ष्णोग्राश्विमृगे द्विदैवदहने शस्त्रं शुभं घट्टितं १९ मुद्राणां पातनं सद्ध्रु
वमृदुचरभक्षिप्रभैर्वीन्दुसौरे घस्रे पूर्णाजयाख्ये न च गुरुभृगुजास्ते विलग्ने शुभैः स्यात्॥ २० ॥ ॥

मैत्रमैन्द्रववाजिनः त्वाष्ट्रं कर्मन तु त्राणमेभिर्ऋक्षैः प्रशस्यत इति ऋक्षोच्चयोक्तेः अथ सुवर्णरूप्यादिपात्रे भोजनमुहूर्तमाह वसिष्ठः लघुमैत्र
ध्रुवचरभे सितेंदुबुधजीववारेषु हेमरजतादिभाजनभोजनमारोग्यामृतयोगेषु इति १९ अथ मुद्रापातनमुहूर्तं वस्त्रक्षालनमुहूर्तं च स्रग्धरा
ह मुद्राणामिति ध्रुवमृदुचरक्षिप्रसंज्ञकैर्नक्षत्रैः कलाराजमुद्राकिंतु सुवर्णरूप्यादिनिष्पादनं मुद्रापातनमित्युच्यते टकसालेति भाषया
वींदुसौरेघस्रे चंद्रशनैश्चरवार्जितवारे तथा पूर्णाजयाख्ये पूर्णाः पंचमीदशमीपूर्णिमाः जयास्तृतीयाष्टमीत्रयोदश्यः एतासु तिथिष्वित्यर्थः
शुभं स्यात् तथा गुरुशुक्रास्ते न शुभं विलग्ने शुभैः लग्ने शुभग्रहैः सद्भिरित्यर्थः उक्तंच मृदुध्रुवक्षिप्रचरेषु भेषु योगे प्रशस्ते शनिचंद्रवर्ज्ये वा
रे तिथौ पूर्णजयाह्वयेच मुद्राप्रतिष्ठा शुभदा नराणां गुर्वस्ते वा सितास्ते वा मुद्राणां घटनं क्वचित् क्रूरग्रहदृशा लग्नेन कार्यं भूतिमिच्छता॥

अथ ध्रुवे वसुधैनिष्ठा हयोऽश्विनी दिनकृत्तु हस्तः तस्मात्त्वंचके हस्तचित्रास्वाती विशाखानुराधासु आदित्यं पुनर्वसुः पुष्ये वस्त्राणां क्षालनं रजका
धानार्थं दानं सतत शुभं स्यात् रिक्तापर्वाणि पूर्वोक्तानि तिथिप्रकरणे षष्ठीपितृदिनं श्राद्धदिनं एतेषु वर्जितेषु शनिबुधवारेषु कदापि वस्त्रक्षालनं नो
कार्यं २० अथ खड्गादि धारणं शय्याद्युपभोगमुहूर्तं च स्रग्धरयाह संधार्या इति विरिक्ते रिक्तावर्जित शुक्र बृहस्पति रविवारे तथा मैत्र ध्रुव लघु सं
ज्ञक नक्षत्र सहित पुनर्वसु ज्येष्ठा विशाखा नक्षत्रेषु कुंतादयः संधार्याः कुंतो भल्लः वर्म कवच इषवो बाणाः आस्यते अनेनेति आसनं धनुः शरो बाणः
कृपाणः खड्गः असिपुत्री छुरिका संनाहोऽपीति केचित् तथा स्थिराख्ये वृषसिंहवृश्चिककुंभाख्ये लग्ने चंद्रे अपिशब्दात् लग्नेपि शुभग्रहदृष्टे शुभैः

वस्त्राणां क्षालनं सद्मसु हयदिनकृत्त्वंचकादित्यपुष्ये नोरिक्तापर्वषष्ठीपितृदिनरविजज्ञेषु कार्यं कदापि २० संधार्याः कुं
तवर्मेषुक्षनशरकृपाणासिपुत्र्यो विरिक्ते शुक्रेज्यार्के ह्नि मैत्रध्रुवलघुसहितादित्यशाक्रद्विदैवे स्युर्लग्नेहि स्थिराख्ये राशि
नि च शुभग्रहदृष्टे शुभैः केंद्रगैः स्याद्भोगः शय्यासनादेर्ध्रुवमृदुलघुहर्यंतकादित्यइष्टः २१

केंद्रगैः सद्भिः कुंतादिधारणं हितं क्ष सोञ्चये पुष्ये चादितिचित्रपद्मतनये शाक्रोत्तरारेवती वाजी हस्तविशाखमित्रसहिते भानौ गुरौ भार्गवे कुंभे
कीटगृहे वृषे मृगपतौ चंद्रे शुभे वीक्षिते संनाहं शरखड्गकुंतछुरिका धार्या नृपाणां हितेति यत्तु दीपिकायां मूलेंदुपूर्वात्रययाम्यपित्र्य शक्राश्विस
पौनलमूलिनश्च शस्त्रादिसंधारणमेषु कुर्यात्तिथौ विलग्ने च शुभे शुभाहे इति तदासन्नयुद्धादिविषयं अथ ध्रुवमृदुलघुनक्षत्रेषु हरौ श्रवणे
अंतके भरण्यां आदित्ये पुनर्वसौ एषु शय्यासनादेः शय्याः खट्वादिरूपा आसनं पीठमृगत्वगादि आदिशब्दात् पादुका तेषामुपभोगः इष्टः हि
तः दीपिकायां मैत्रेंदुपुष्यपमभादितिवह्निचित्राहस्तोत्तरात्रयहरीज्यविधातृभानि एतेषु सती वशयनासनपादुकानां संभोगकार्यमुदितं मुनि
भिः शुभाहे इति २१॥

अथांधादिनक्षत्राणि शार्दूलविक्रीडितेनाह अंधाक्षमिति धातारोहिणी विधिरभिजित् दहनभं कृत्तिका भगः पूर्वाफाल्गुनी अन्यत्स्पष्टं २२
अंधादिनक्षत्राणां फलमनुष्टुभाह विनष्टार्थ इति अंधनक्षत्रेषु विनष्टस्यापहृतस्यार्थस्य लाभः शीघ्रं भवति मंदनक्षत्रेषु विनष्टार्थस्य प्रयत्नतो
लाभो भवति मध्यमध्यनक्षत्रे विनष्टार्थस्य दूरं स्वनगरादतीव दूरदेशे श्रवणं त्वदीयद्रव्यममुकेन हृतं तच्चामुकस्थले तिष्ठतीति लोकवार्ता भवति
लब्धिस्तु नास्ति सुलोचननक्षत्रेषु श्रुत्याप्तीन श्रवणमपि लब्धिरपि न भवतीत्यर्थः २३ अथ धनप्रयोगे निषिद्धनक्षत्राण्यनुष्टुभाह तीक्ष्णेति
एतैस्तीक्ष्णादिनक्षत्रैर्यद्द्रव्यं सुवर्णादि दत्तं कालांतरं विना दत्तं न स्वसत्तापरित्यागेन निवेशितं स्वेष्टसमीपे प्रत्ययार्थं स्थापितं प्रयुक्तं कालांतरी

अंधाक्षं वसुपुष्यधातृजलभद्वीशार्यमांत्याभिधं मंदाक्षं रविविश्वमैत्रजलपाश्लेषाश्विचांद्रं भवेत् मध्याक्षं शिवपित्रजैक
चरणत्वाष्ट्रेंद्रविध्यंतकं स्वक्षं स्वात्यदितिश्रवोदहनभाहिर्बुध्न्यरक्षोभगं २२ विनष्टार्थस्य लाभोऽंधे शीघ्रं मंदे प्रयत्नतः
स्याद्दूरे श्रवणं मध्ये श्रुत्याप्तीन सुलोचने २३ तीक्ष्णमिश्रध्रुवोग्रैर्यद्द्रव्यं दत्तं निवेशितं प्रयुक्तं च विनष्टं च विष्ट्यां पाते च ना
प्यते २४ मित्रार्कध्रुववासवांबुपमघातोयांत्यपुष्येंदुभिः पापैर्हीनबलैस्तनौ सुरगुरौ तेवा भृगौ खे विधौ ॥ ॥ ॥

तिपुरःसरं कस्मैचिद्दत्तं विनष्टं चौरादिना हृतं स्वयमेव वा क्वचित्त्यक्तं द्रव्यं निश्चयेन कदापि नाप्यते तथा विष्ट्यां भद्रायां पाते व्यतीपाते महापाते वा हृ
तं द्रव्यं नाप्यते चकाराद्धरणेऽपि वसिष्ठः ध्रुवोग्रसाधारणदारुणक्षैर्निक्षिप्तमर्थं त्वथवा प्रनष्टं चौरैर्हृतं दत्तमुपप्लवं वा विष्ट्यां च पाते न न लभ्यते।
तदिति अत्रेदमनुसंधेयं तीक्ष्णमिश्रादिपंचदशभेषु मध्ये रोहिण्यार्यमविश्वजलभद्वीशेषु दत्तनिवेशितप्रयुक्तद्रव्यस्यैवाऽप्राप्तिः चौरापहृ
तस्य स्वतो गतस्य वा धनस्य लाभ एव तेषां रोहिण्यादीनां मध्यमलोचनभेषु पाठसामर्थ्यादिति भावः २४ अथ जलाशयखनननृत्यारंभयोर्मुहू
र्तं शार्दूलविक्रीडितेनाह मित्रार्केति अनुराधादित्रयोदशनक्षत्रैः सद्भिः पापग्रहैर्हीनबलैर्बलरहितैः सद्भिः तनौ लग्ने सुरगुरौ स ॥ ॥

तिबुधे वा सति खेदशमे मृगौ शुक्रे सति आप्ये जलराशौ विधौ सति सर्वतोयाशयानां वापीकूपतडागादीनां तोयाधाराणां खननं हितं स्यात् आ
प्यांबुपांत्यपितृमित्रवसूत्तरार्के केंद्रीड्ये भेषु खननं सलिलाशयानामिति व्यवहारतत्वोक्तेः श्रीपतिः लग्ने जीवे तैथवा दुर्बलैश्च क्रूरैः शुक्रे वापि मे
षुरणस्थे आप्ये चंद्रे सर्वतोयाशयानामारंभाः स्युः सिद्धये निर्विकल्पमिति अथ नृत्यारंभः तैः प्रागुक्तैर्नक्षत्रैर्व्यंभौमधिष्ण्यैः पूर्वाषाढामघारहितैः सेंद्र
भे ज्येष्ठासहितैः मित्रार्कध्रुववासवांबुपांत्यपुष्येंदुज्येष्ठानक्षत्रैः नृत्यारंभः शुभः स्यात् शुभैर्हिबुके चतुर्थस्थाने लग्ने तत्र सति ज्ञे चंद्रे तु राशौ मिथु
नकन्यास्थे सतीत्यर्थः २५ अथ सेवकस्य स्वामिसेवायां मुहूर्तं शालिन्याह क्षिप्रेति क्षिप्राणि हस्ताभिजिदश्विपुष्याः मैत्राणि मृगरेवतीचित्रानुराधाः
एतेषु नक्षत्रेषु बुधशुक्रसूर्यगुरुवारे सौम्ये शुभग्रहे लग्नगे सति अर्के भौमे वा खलाभे दशमे एकादशे च स्थिते सति सेवकेन स्वामिनः सेवा कार्या

आप्ये सर्वजलाशयस्य खननं व्यंभौमघैः सेंद्रभैस्तैर्नृत्यं हिबुके शुभैस्तनुगृहे ते ज्ञे तराशौ शुभं २५ क्षिप्रे मैत्रे वित्तिताके ज्यवा
रे सौम्ये लग्नेऽर्के कुजे वा खलाभे योनेर्मैत्र्यां राशिपाश्चापि मैत्र्यां सेवा कार्या स्वामिनः सेवकेन २६ स्वात्यादित्यमृदुद्विदैव
गुरुभे कर्णत्रयाश्वे चरे लग्ने धर्मसुताष्टशुद्धिसहिते द्रव्यः प्रयोगः शुभः ॥ १ तत्र स्वामिसेवकनक्षत्रयोन्योर्मैत्र्यां च पुनः राशिपोः सेव्य

सेवकयो राशिस्वामिनोर्मैत्र्यां प्रीतौ सत्यां सेवा कार्या अन्यथा न कार्या २६ अथ द्रव्यप्रयोगऋणग्रहणमुहूर्तं शार्दूलविक्रीडितेनाह स्वात्यादित्यति
स्वात्याद्येकादशनक्षत्रे ध्रुवचरे मेषकर्कतुलामकराणामन्यतमे लग्ने धर्मे नवमं सुतः पंचमं अष्टमे एतेषां शुद्धिः नवपंचमयोः पापग्रहरहितत्व
अष्टमे तु शुभपापरहितस्य मेवरूपा शुद्धिस्तया सहिते तल्लग्ने द्रव्यप्रयोगः ऋणंदानं शुभं स्यात् भौमपराक्रमे मृदुपुष्याश्विनी चैव विशाखा श्रवणत्र
यं पुनर्वसौ चरसंज्ञेति धनादिनिधिवर्तनं वर्तनमृणादिरूपेण दानं मिश्रनक्षत्रत्वाद्विशाखायां निषेधे प्राप्ते ऋणदाने एवं विधिः हूतेन स्वातौ निषि
द्धैव शुद्धेषु धर्मात्मजैः ...ऽष्टने ध्रुवचरे विलग्ने द्रविणप्रयोगः इति अथारे भौमवारे ऋणं न ग्राह्यं ऋणं भौमेन गृह्णीयान्न देयं बुधवासरे ॥

ऋणछेदं कुजे कुर्यात्संचयं सोमनंदने अथ तु विशेषे संक्रमसंक्रांतिदिवसे वृद्धौ वृद्धियोगे करे हस्तनक्षत्रे अर्केह्नि रविवारे इति यत् तत्रापि न
ग्राह्यमित्येकं संबंधः यत् यस्माद्धेतोस्तदृणं तद्वंशे ऋणं गृहीतुः कुलेषु भवेत् तत्पुत्रपौत्रादिभिरपि परिहर्तुमशक्यमित्यर्थः हस्तेऽर्कवारे संक्रां
तौ यदृणं स्यात्कुलेषु न तत् वृद्धियोगे तथा ज्ञेयमृणछेदं तु कारयेदिति ज्योतिःप्रकाशोक्तेः बुधवारे ऋणं कदापि न देयं २७ अथ हलप्रवाहमुहू
र्तं शार्दूलविक्रीडितेनाह मूलद्वीशेति एतैः मूलादिभिरेकोनविंशतिनक्षत्रैः विनार्कं शनिं रविशनिवारौ वर्जयित्वान्यवारेषु तत्र पापैर्हीनबलैर्नि
र्बलैः चंद्रे जलराशिनवांशके सति शुक्रे चंद्रे च मांसले पुष्टे सति उदितेत्यर्थः गुरौ लग्ने च सति तदा प्रथमं हलप्रवहणं शस्तं स्यात् कश्यपः गुरौ ल
ग्नगते शुक्रे बलिन्याप्योदये विधौ शस्ता कृषिक्रिया तत्र दुर्बलैः क्रूरखेचरैः अथ सिंहे घटे कुंभे कर्के अजमेषे एणो मकरे घटे तुलायां तथा

नारे ग्राह्यमृणं तु संक्रमदिने वृद्धौ करेऽर्केह्नि यत्तद्वंशेषु भवेदृणं न च बुधे देयं कदाचिद्धनं २७ मूलद्वीशमघाचरध्रुवमृदु
क्षिप्रैर्विनार्कं शनिं पापैर्हीनबलैर्विधौ जललवे शुक्रे विधौ मांसले लग्ने देवगुरौ हलप्रवहणं शस्तं न सिंहे घटे कर्कोजैणध
टे तनौ क्षयकं रिक्तासु षष्ठ्यां तथा २८ एतेषु श्रुतिवारुणादितिविशाखोडूनि भौमं विना बीजोप्तिर्गदिता शुभान्वगुभतोष्टा
ग्नींदुरामेंदवः॥

रिक्तासु षष्ठ्यां तथा शब्दोऽनुक्तसमुच्चयार्थस्तेनाष्टम्यामपि न शस्तः यस्मात्क्षयकरं २८ अथ बीजोप्तिमुहूर्ते फणिचक्रं
च शार्दूलविक्रीडितेनाह एतेष्विति पूर्वोक्तनक्षत्रेषु श्रुतिवारुणादितिविशाखोडूनि विना श्रवणादिवर्जितेषु मूलमघाध्रुवमृदुक्षिप्रधनिष्ठा।
स्वातीषु भौमं विना भौमवारव्यतिरिक्तवारेषु बीजोप्तिः बीजवापनं शुभं ज्ञेयं नारदः मृदुध्रुवक्षिप्रभेषु पित्र्यवायुवसूडुषु समूलभेषु बीजोप्तिरस्तु
कृष्टफलप्रदा रवौ रौद्राद्यपादस्थे भूमौ संजायते रजः तस्माद्दिनत्रयं तत्र बीजवापं परित्यजेदिति राजमार्तंडे आर्द्राप्रथमदिनत्रयनिषेधः अथ
बीजोप्तौ फणिचक्रं अगुभतो न विध्यंते गावो यस्येति अगुः राहुः तस्य भं तदाक्रांतनक्षत्रं तस्मादादौ अष्टौ भानि असंति असमीचीनानि ततस्त्रीणि शु

भकराणि ततएकमशुभं ततस्त्रीणिशुभानि ततएकमशुभं ततस्त्रीणिशुभानि ततश्चत्वार्यशुभानि एवंवीजोप्तौसप्तविंशतिनक्षत्राणांशुभाशु
भकराणि ततएकमशुभं ततस्त्रीणिशुभानि ततएकमशुभं ततस्त्रीणिशुभानि ततश्चत्वार्यशुभानि एवंवीजोप्तौ सप्तविंशतिनक्षत्राणांशुभाशु
भत्वमुक्तं रत्नमालायां मूर्ध्नित्रीणिगलेत्रयंचजठरे धिष्ण्यानिचद्वादशेत्यादि लग्नशुद्धिमाहवसिष्ठः भवरिपुसहजे पापैस्त्रिकोणकेंद्रस्थितैश्च
शुभैः कथितेशुभधिष्ण्येपिचशुभलग्नेवीजवापनंकार्यं अथहलचक्रमुच्यते हलेइतिहलचक्रेअर्कोज्झितात्भात्नक्षत्रात्क्रमेणत्रीणिअसं
तिअशुभानि ततोष्टभानिसंतिशुभानि ततोनवभानिअसंति ततोष्टौभानिसंति यथा सूर्यआर्द्रायांशुक्रंभंमृगः ततआरभ्यत्रीणिऋंशुभानि ततःपु
ष्यतोष्टभानिशुभानि ततोविशाखातोनवभान्यशुभानि ततःशततारकातोऽष्टभानिशुभानि एवमष्टाविंशतिभानिजातानि तथावसिष्ठः अर्कगताग
तेषुभवतिहलतोभ्यम्भुभेस्वदन्यानि सप्तकंशुसमूलत्वकेविमुक्तभात हानिर्वृद्धिः कर्तृनाशो
संस्येभवतितयंतेष्टसुभयनस्त्विष्टं षोडशाधिदन्त्यनवकंशिष्टमनिष्टंचलांगलेचक्रे कश्यपोपित्रिषष्ठसुनवरेषुसप्तलर्क विमुक्तभात हानिर्वृद्धिः कर्तृनाशोऽगलाख्येरिति
लक्ष्मीप्राप्तिर्भयात्क्रमादिति एवंबहुमुनिसंवादेसतिइनप्रोज्झितर्क्षात् त्रिवह्नित्रीषुत्रीषुत्रिरामा ३।३।३।५।३।५।३।३ण्यशुभदशुभानिक्रमाल्लांगलाख्येरिति
लक्ष्मीप्राप्तिर्भयात्क्रमादिति एवंबहुमुनिसंवादेसतिइनप्रोज्झितर्क्षात् त्रिवह्नित्रीषुत्रीषुत्रिरामा प्रोक्तान्यसत्संतिच २९॥

एभिर्द्वनियुगान्यसच्छुभकराण्युप्तौहलेकोज्झितान्नाद्रामाष्टनवाष्टभानिमुनिभिः प्रोक्तान्यसत्संतिच ततस्तुक्त
यदुक्तंगणेशदैवज्ञैर्मुहूर्ततत्त्वेतच्चिंत्यंकश्यपवाक्यमूलाभावात् ननुश्रीपतिवाक्यं अर्कक्रांतगतागतान्यनडुहांनाशायभान्यग्रतोहद्दौभवितियंततस्तुक्त
पिहित घातायशूलत्रयधिष्ण्यानां नवकंनदंतरगेतस्यानांश्रियैपंचकेयच्चान्यत्रितयंनदग्रगदितंचक्रेशुभंलांगलेइतिमूलंचेत् नह्यपश्चायतिवाक्येश
पिहित घातायशूलत्रयधिष्ण्यानांनवकंनदंतरगेतस्यानांश्रियैपंचकेयच्चान्यत्रितयंनदग्रगदितंचक्रेशुभंलांगलेइतिमूलंचेत् नह्यपश्चायतिवाक्येशा
व्दार्थः किंतुमूलवाक्यावोधनस्वात्तानप्रकाशकः वाक्यार्थस्तु अर्कोक्रांतगतानित्रीणिभानिवृषनाशकराणिस्युः ततस्त्रीणिवृद्धै ततःपंचनक्षत्राण्य
पाय अग्निमाणिनवभानिशूलत्रये त्रिकंत्रिकंकृषिहृत घातायच्छाप्यानि नन्वत्रपंचनक्षत्रत्यागेकोहेतुरित्यतआह तदंतरगतेपंचकइति तच्छ
ब्देनहलोर्ध्वदंडाशूलोर्ध्वदंडानुच्यते अर्काक्रांतगतागतान्यनडुहांनाशायभान्यग्रतोहद्दौभवितियंअयमंतरस्यपूर्वावधिः मध्येततः पदोपादाना
त् तुशब्दस्तु आनंतर्यद्योतनार्थः तुअनंतरशूलत्रयेधिष्ण्यानांनवकंकृषिहृत घातायेतिअनंतरस्यांतरावधिः तयोरंतरगतेमध्येविद्यमानाधिष्ण्यानां
पंचकंचपंचकंचश्रियैस्यात्पनक्षत्रदशकमितियावत् यच्चान्यद्वित्रितयंहलदंडोर्ध्वभागशुभंफलंदलेख्य एवंचसतिकृषिवाक्येसहास्येकार्यतेवसं

अथशिरामोचनविरेचनादिमुहूर्तं शार्दूलविक्रीडितेनाह त्वाष्ट्रादिति त्वाष्ट्राह्वये चित्रास्वात्यौ मित्रभाह्वये अनुराधाज्येष्ठे कभात्ह्वये रोहिणीमृगौ
श्रोत्रश्रवणः चित्रादिषु एकादशसु नक्षत्रेषु भौमार्कगुरुवारे शिरामोक्षणं रुधिरवाहिनी नाडिका शिरा तस्याः सूक्ष्मशस्त्रघातेन नरः शिरातो रक्तमोक्षणं
कुर्यात् अथ बुधार्कीविना बुधशनिवारौ त्यक्त्वा अन्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यं औषधेन सुखप्रवृत्तिर्विरेकः वमनं वांतं एतत् दाद्यं कुर्यात् ॥
मित्रक्षिप्रचरध्रुवेषु त्रयोदशनक्षत्रेषु रविवारे शुभग्रहवारे च विदो बुधस्य लग्नवर्गे जीवस्यापि लग्नवर्गे यस्मिन्कस्मिंश्चिल्लग्नेपि गुरुबुधयोः षड्वर्गे
सति तमोलग्ने गुरौ च सति कर्तुर्गुरुबले च सति धर्मक्रियाकोटिहोमरुद्रानुष्ठानादिरूपा निगदिता कथिता ३० अथ धान्यच्छेदनं वसंततिलकेनाह ती

त्वाष्ट्रान्मित्रकभाह्वये बुधलघुश्रोत्रे शिरामोक्षणं भौमार्केज्यदिने विरेकवमनाद्यं स्याद्बुधार्कीविना मित्रक्षिप्रचरध्रुवे रविशुभा
हे लग्नवर्गे विदो जीवस्यापि तनौ गुरौ निगदिता धर्मक्रिया तद्बले ३० तीक्ष्णाजपादकरवह्निवसुश्रुतीन्दुस्वातीमघोत्तरजलांतक
तक्षपुष्ये मंदाररिक्तरहिते दिवसेतिशस्ता धान्यच्छिदा निगदिता स्थिरभे विलग्ने ३१ भाग्यार्यमश्रुतिमघेंद्रविधातृमूलमैत्रांत्य
भेषु कथितं कणमर्दनं स्यात् तीक्ष्णाजपान्निर्ऋतिधातृशतार्यमर्क्षैः सस्यस्य रोपणमिहार्किकुजौ विना सत् ३२ मिश्रोग्ररौद्र
भुजगेंद्रविभिन्नभेषु कोजतौलिरहिते च तनौ शुभा हे ॥

३१ तीक्ष्णाजपादेति एतेष्वेकोनविंशतिनक्षत्रेषु तथा भौमशनिरिक्तावर्जितदिने
स्थिरलग्ने सति धान्यादीनां यवादीनां छिदा छेदनं निगदिता कथिता ३१ अथ कणमर्दनं सस्यरोपणं च वसंततिलकेनाह भाग्येति विधिः रो
हिणी अंत्यरेवती एषु नवभेषु कणानां चणकादीनां मर्दनं यष्टिघातादिना वितुषीकरणं तत्समीचीनं स्यात् अथ विशाखादिषट्नक्षत्रैः आर्कि
कुजौ विना शनिभौमतोन्यवारेषु सस्यस्य धान्यस्य रोपणं सत् शुभं ३२ अथ धान्यस्थिति धान्यवृद्धिं च वसंततिलकेनाह मिश्रोग्रेति मिश्रोग्रा
दिविभिन्नेषु मिश्रादिदशनक्षत्रेभ्यो अन्येषु सप्तदशनक्षत्रेषु तथा कर्कमेषतुलारहिते लग्ने मकरस्थिरद्विस्वभावलग्नेषु शु ॥ ॥

अथशिरामोचनविरेचनादिमुहूर्त्तं शार्दूलविक्रीडितेनाह त्वाष्ट्रादिति त्वाष्ट्रद्वये चित्रास्वात्यौ मित्रभाद्वये अनुराधाज्येष्ठे कभात्द्वये रोहिणीमृगौ
श्रोत्रश्रवणः चित्रादिषु एकादशसु नक्षत्रेषु भौमार्कगुरुवारे शिरामोक्षणं रुधिरवाहिनी नाडिका शिरा तस्याः सूक्ष्मशस्त्रघातेन नरशिरातो रक्तमोक्षणं
कुर्यात् अथबुधार्कीविनाबुधशनिवारोत्यन्कान्यवारेषु पूर्वोक्तनक्षत्रेषु च विरेकवमनाद्यं औषधेन सुखप्रवृत्तिर्विरेकः वमनं वा तएतदाद्यं कुर्यात् ॥
मित्रक्षिप्रचरध्रुवेषु त्रयोदशनक्षत्रेषु रविवारे शुभग्रहवारे च विदो बुधस्य लग्नवर्गे जीवस्यापि लग्नवर्गे यस्मिन्कस्मिंश्चिल्लग्नेपि गुरुबुधयोः षड्वर्गे
सति तत्भौ लग्ने गुरौ च सति कर्त्तुर्गुरुबले च सति धर्मक्रियाकोटिहोमरुद्रानुष्ठानादिरूपा निगदिता कथिता ३० अथधान्यछेदनवसन्ततिलकेनाह नी

त्वाष्ट्रान्मित्रकभाद्वयेंबुपलघुश्रोत्रे शिरामोक्षणं भौमार्केज्यदिने विरेकवमनाद्यं स्यात् बुधार्कीविना मित्रक्षिप्रचरध्रुवेर विशुभा
हे लग्नवर्गे विदो जीवस्यापि तनौ गुरौ निगदिता धर्मक्रिया तद्बले ३० नीरध्याजपादकरवह्निवसुश्रुतींदुस्वातीमघोत्तरजलांतक
तक्षपुष्ये मंदारिरिक्तरहिते दिवसे तिरालाधान्यछिदा निगदिता स्थिरभे विलग्ने ३१ भाग्यार्यमश्रुतिमघेंद्रविधातृमूलमैत्रांत्य
भेषु कथितं कणमर्दनं स्यात् द्वीशाजपान्तिर्न ति धातृशतार्यमक्षैः सस्यस्यरोपणमिहार्किकुजौ विनासत् ३२ मिश्रोग्ररौद्र
भुजगेंद्रविभिन्नभेषु ककोजतौलिरहिते च तनौ शुभाहे ॥ ३१ स्णाजपादेति एतेष्वेकोनविंशतिनक्षत्रेषु तथा भौमशनिरिक्तावर्जितदिने

स्थिरलग्ने सति धान्यादीनां यवादीनां छिदाछेदनं निगदिता कथिता ३१ अथकणमर्दनंसस्यरोपणंचवसंततिलकेनाह भाग्येति विधिः रो
हिणी अंत्यरेवती एषुनवभेषुकणानां चणकादीनां मर्दनं यष्टिघातादिना वितुषीकरणं तत्समीचीनं स्यात् अथविशाखादिषट्नक्षत्रैः आर्कि
कुजौ विनाशनिभौमतोन्यवारेषु सस्यस्य धान्यस्य रोपणं सत् शुभं ३२ अथधान्यस्थिति धान्यवृद्धिं च वसंततिलकेनाह मिश्रोग्रेति मिश्रोग्रा
दिविभिन्नेषु मिश्रादिदशनक्षत्रेभ्योन्येषु सप्तदशनक्षत्रेषु तथा कर्कमेषतुलारहिते लग्ने मकरस्थिरद्विस्वभावलग्नेषु शुभ ॥ ॥

माहचंद्रबुधगुरुशुक्रवारे धान्यानां स्थितिः एकत्रस्थले स्थापनं सा शुभकरी निगदिता अथ ध्रुवेज्यादित्रयोदशनक्षत्रेषु धान्यवृद्धिः मह्यमेतावद्धा
न्यं देहि ततो मासद्वयानंतरं सपादं सार्धं वा दास्यामीत्येवंरूपा वृद्धिर्निगदिता ३३ अथ शांतिकपौष्टिकादिकं वसंततिलकेनाह क्षिप्रेति क्षिप्रादिनक्षत्रे
षु पौष्टिकमंगलाभ्यां सह पौष्टिककर्मणा ग्रहशांत्या मंगलकर्मणा विनाविनायकशांत्या सह शांतिके दुष्टफलदं मूलादिनक्षत्रोत्पन्नशांत्यादि शुभं स्या
त् लग्नात् खे दशमेऽर्के सति विधौ चंद्रे सुखगे चतुर्थे गुरौ लग्नस्थे सति तनुः शांतिकं मौढ्यादिदुष्टसमये गुरुशुक्रास्तादिदुष्टकाले नो शुभदं तथा नि
मित्तके त्वाद्युत्पातदर्शने सति गुरुशुक्रास्तादावपि शुभं स्यात्. उक्तं च शांतिकर्माणि कुर्वीत रोगे नैमित्तिके तथा गुरुभार्गवमौढ्येऽपि दोषस्तत्र न विद्य
ते ३४ अथ होमाहुतिशुद्धिमनुष्टुभाह सूर्यभादिति सूर्याक्रांतनक्षत्रात् त्रित्रिभे नक्षत्रत्रयमध्ये चंद्रे चंद्रनक्षत्रे दिननक्षत्रे सति क्रमात् सूर्यादिषु

धान्यस्थितिः शुभकरी गदिता ध्रुवेज्यद्वीशेंद्रदस्रचरभेषु च धान्यवृद्धिः ३३ क्षिप्रध्रुवांत्यचरमैत्रमघासु शस्ता स्याच्छांतिकं
सह च मंगलपौष्टिकाभ्यां खेऽर्के विधौ सुखगते तनुगे गुरौ नो मौढ्यादिदुष्टसमये शुभदं निमित्ते ३४ सूर्यभात्त्रित्रिभे चंद्रे सू
र्यविच्छुक्रपंगवः चंद्रारेज्यागुशिखिनो नेष्टा होमाहुतिः खले ३५ सैका तिथिर्वारयुता कृताप्ता शेषे गुणेऽभ्रे भुवि वह्निवासः॥

स्थे होमाहुतिः पतति यथा सूर्याक्रांतनक्षत्रात् नक्षत्रत्रयमध्ये होमारंभे सूर्यमुखे होमाहुतिः पतति ततो नक्षत्रत्रये बुधस्य ततः शुक्रस्य ततः पंगोः श
नेः ततश्चंद्रस्य ततः आरस्य भौमस्य तत इज्यस्य गुरोः ततः राहोः ततः शिखिनः केतोः एवं सति यद्दिने खले पापग्रहमुखे होमाहुतिः पतति सा नेष्टा न
शुभदा अर्थाच्छुभग्रहमुखे शुभा सूर्यनक्षत्राच्चंद्रनक्षत्रपर्यंतगणना ३५ अथ यद्दिने होमश्चिकीर्षितस्तद्दिने वह्निनिवासवशेन शुभाशुभफल
मिंद्रवज्रयाह सैकेति शुक्लादिगणनया वर्तमानतिथिगण्या एकयुता वर्तमानवारयुता च चतुर्भक्ता यच्छेषं तत्र गुणमितं त्रिमितं शून्यमितं च तदा भुवि
भूमौ वह्निवासो भवति फलमाह सौख्यायेति होमदिने भूमावग्नेर्वासे सति सौख्यं भवति अथ राशियुग्मशेषे एकमिते शेषेऽग्निवासो दिवि स्वर्गे।

फलं कर्तुः प्राणनाशः द्विमिते शेषेऽग्निवासो भूतले तत्फलं कर्तुरर्थनाशः उक्तं च तिथिवारयुतिः सैका वेदभक्तावशेषकात् निवासो ग्नेर्व्योम्निहृत्ये
वित्तप्राणविनाशदः पाताले द्विकशेषेण धनसंचयनाशनः गुणवेदावशेषेण भूमौ विपुलसौख्यदः संस्कारेषु विचारोऽस्य न कार्यो नापि वैलवे नित्ये
नैमित्तिके कार्ये नवाब्दे मुनिभिः स्मृतः केश्चित् खेटसुप्तमपि होमे वर्ज्यमित्युक्तं तद्यथा अर्कश्चंद्राद्दष्टमे त्राचतुर्थे मंदः शुक्राद्दष्टमेंगारकश्च राहु
र्धर्मे जीवतः खेटसुप्ते होमे नाशः पुत्रदाराधनानामिति ३६ अथ प्रतिवर्षोत्पन्ननवान्नभक्षणमनुष्टुभाह नवान्नमिति चरादिद्वादशभेषु सत्तनौ स
मीचीनलग्ने शुभग्रहैर्युते दृष्टे चेत्यर्थः नंदातिथयः १।६।११ विषघटी विवाहप्रकरणोक्ता मधुश्चैत्रः पौषः आर्किः शनिः भूमिजो भौमः एतान्वि
नावर्जयित्वा नवान्नभक्षणं शुभं ३७ अथ नौकाघटनमनुष्टुभाह याम्यत्रयेति याम्यत्रयं भरणीकृत्तिकारोहिण्यः ऐशाऽऽर्द्रा अन्यानि प्रसिद्धानि

सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशो दिवि भूतले च ३६ नवान्नं स्याच्चरक्षिप्रमृदुभे सत्तनौ शुभं विनानंदाविषघटी
मधुपौषार्किभूमिजान् ३७ याम्यत्रयविशाखेंद्रसार्पपित्र्येशभिन्नभे भृग्वीज्यार्कदिने नौकाघटनं सत्तनौ शुभं ३८ मूलार्द्रा
भरणीपित्र्यमृगे सौम्ये घटे तनौ सुखे शुक्रेऽष्टमे शुद्धे सिद्धिर्वीराभिचारयोः ३९ अंत्यादितिध्रुवमघानिलसार्पधिष्ण्ये रिक्तेतिथौ
चरतनौ विकवींदुवारे॥ ३८ एभ्यो भिन्ननक्षत्रेषु शुक्रगुरुरविवारे सत्तनौ शुभयुतदृष्टे लग्ने नौकाघटनं नौकानिर्माणं शुभं नौकाचालनं नौका
गमनमुहूर्तं दीपिकायां शुभाहे विष्णुयुग्मेंदुभगमैत्राश्विपाणिषु चालनं घटनं स्थानान्नावः शुभतिथौ द्युषु अश्विकरेज्यसुधानिधिपूर्वामित्रधना॥
च्युतभेषु भलग्ने तारकयोगतिथौ दिवि शुद्धो नौगमनं सुभदं शुभवारे ३८ अथ वीराभिचारयोर्मुहूर्तमनुष्टुभाह मूलेति मूलादिनक्षत्रपंचके
तथा घटे तनौ कुंभलग्ने सौम्ये बुधे सति तथा शुक्रे सुखे चतुर्थे अष्टमे शुद्धे ग्रहरहिते सति एवं लग्ने वीरस्य धनस्य अभिचारस्य कर्मणः सिद्धिः निष्पत्तिः
३९ अथ रोगनिर्मुक्तस्नानं वसंततिलकेनाह अंत्येति विगतांत्यत्यादीनि रेवत्यादीनि नवधिष्ण्यानि येभ्यस्तेषु षष्टादशशिष्टनक्षत्रेषु॥ ॥

नथारिक्तासंज्ञासुतिथिषुचरलग्नेतथाशुक्रचंद्रवर्जितवारेतथाविधौचंद्रेहीनेनिषिद्धस्थानस्थेनिषिद्धस्थानानिगोचरप्रकरणेतथापापग्रहैर्भवेएका
दशेकेंद्रे१४।७।१० कोणेनवपंचमेस्थानेस्थितैः सद्भिः एवंविधेलग्नेरुजाविरहितस्यरोगनिर्मुक्तस्यजनस्यस्नानं आरोग्यस्नानंप्रशस्तंशुभं नारदः स्थि
रेज्यादितिसार्पान्त्यपितृवारुणभेषुच नकुर्याद्रोगमुक्तस्यस्नानंवारेज्ञशुक्रयोरिति ४० अथशिल्पविद्यामनुष्टुभाह मृदुध्रुवेति मृदुध्रुवादिनक्षत्रे
बुधेदशमेलग्नेवासति अथवागुरौदशमेलग्नेवासति तथाविधौचंद्रेबुधगुरुषड्वर्गस्थेचसति शिल्पविद्यानानावर्णादिनिर्मितंमूर्त्यादिकंतद्विद्या
याः प्रारंभः शस्यते ४१ अथसंधानमनुष्टुभाह सुरेज्येति पुष्यादिनक्षत्रेतथाष्टम्यांतिथौहरौद्वादश्यांचतिथौनैतिलकरणेच तथाशुक्रदृष्टयुतेच
लग्नेतथाशुभग्रहाणांवारेसंधानंसंधिमैत्रीतियावत्‌ इष्यते तथाचकश्यपः भाग्यपुष्येसमैत्रेचलग्नेशुक्रेसितेयुते करणेनैतिलेष्टम्यांद्वादश्यांसंधि

स्नानंरुजाविरहितस्यशस्तंहीनेविधौखलखगैर्भवकेंद्रकोणे ४० मृदुध्रुवक्षिप्रचरे ज्ञेगुरौवाखलग्नगे विधौज्ञजी
वावर्गस्थेशिल्पविद्याप्रशस्यते ४१ सुरेज्यमित्रभाग्येषुवाष्टम्यांतैतिलेहरौ शुक्रदृष्टेतनौसौम्यवारेसंधानमिष्यते ४२ त्यक्त्वा
ष्टं८भूत१४ शनिविष्टिकुजान्जनुर्भमासौमृतौ ८ रविविधूअपिभानिनाड्याः॥ [illegible] रिष्यते ४२ अथपरीक्षामुहूर्तंवसंततिलकयाह

त्यक्त्वेति भूतश्चतुर्दशी जनुर्भमासौजन्मर्क्षंजन्ममासश्च जन्मराशेरष्टमंसूर्यंचंद्रंच नाड्याः भानि जन्मभकर्मभादिनक्षत्राणिनाडीनक्षत्रा
णिएतानित्यक्त्वा द्व्यंगेद्विस्वभावेचलग्नेचरलग्नेवानवमांशेच चंद्रशुद्धौताराशुद्धौगुरुशुद्धौचसत्यां करोहस्तः अदितिःपुनर्वसुः हरिःश्रव
णः इंद्रोज्येष्ठा कंजलनत्स्वामीवरुणः तस्यनक्षत्रंशततारका एषुभेषुपरीक्षाकार्या अन्यत्स्पष्टं परीक्षानामसुवर्णस्तेयादिपातकाभिशस्त
स्यशुद्ध्यशुद्धिविचारपूर्वकंतप्तमाषादिरूपादिव्यमितियावत्‌ उक्तंचदीपिकायां नोशुक्रास्तेऽष्टमार्केगुरुसहितरवौजन्ममासेऽष्टमेंदौविष्टौमा
समलाख्येकुजशनिदिवसेजन्मताराक्षुचाथ नाडीनक्षत्रहीनेसुरगुरुरजनीनाथताराविशुद्धौप्रातःकार्यापरीक्षाहितनुचरगृहांशोदयेशस्तलग्ने

१ वर्गस्थिति
१ पाठः

इति व्यवहारोच्चये अष्टम्यांचचतुर्दश्यांप्रायश्चित्तपरीक्षणे नपरीक्षाधिवासश्चशनिभौमदिनेभवेत् ज्येष्ठाश्रवणहस्तश्चतथात्रेयःपुनर्वसुः तदु
क्तमभिषाप्रोक्ताह्यभियुक्तविचारणेइतिनाडीनक्षत्राणिदीपिकाकारवचनात् जन्मर्क्षमाद्यंदशमंचकर्मसंघातिकंषोडशभंचमानसं स्यान्यंचविं
शंसमुदायमष्टादशंत्रयोविंशतिभंविनाशकं एवंषट्भोजनःसर्वोजातिदेशाभिषेकभैः नवभोनृपतिर्ज्ञेयोनाडीनाराद्भृतोऽमूः इति नृजातिन
क्षत्राणिवराहसंहितायां पूर्वात्रयंसानलमग्रजानांराज्ञांचपुष्येणसहोत्तराश्च सपौष्णमैत्रंपितृदैवतंचप्रजापतेर्भंचकृषीवलानां आदित्यहस्ताभि
जिदश्विनानिवणिक्जनस्वाम्यमुपागतानि मूलत्रिनेत्रानिलवारुणानिभान्युग्रजातेःप्रभविष्णुतायाः सौम्यंद्रचित्रावसुदैवतानिसेवाजनस्वाम्य
मुपागतानि सार्पंविशाखाश्रवणेभरण्यश्चांडालजातेरभिनिर्दिशंतीति देशोवाराणस्यादिकस्तन्नक्षत्रंशतपदचक्रोक्तं यथा वाराणस्याःनक्षत्रंरो

ह्यंगेचरे तनुलवेशशिजीवताराशुद्धौकरादितिहरीद्रकपेपरीक्षा ४३ व्ययाष्टशुद्धोपचयेलग्नगेशुभदृग्युते चंद्रेत्रिषट्द
शायस्थेसर्वारंभःप्रसिध्यति ४४ स्वातीद्रपूर्वाशिवसार्पभेमृतिर्ज्वरेंत्यमैत्रेस्थिरताभवेद्रुजः याम्यश्रवोवारुणतक्षभेशिवा
घस्राहिपक्षो १५ द्व्यधिपार्कवासवे ४५॥

रोहिणीति अभिषेकभेयस्मिन्पुष्यादिकेनक्षत्रेणराजाभिषेकोजातस्तदभिषेकर्क्षमितिराज्ञां
नवभानिइतरेषांषडेवभानि ४३ अथसामान्यतःशुभकार्येषुलग्नशुद्धिमनुष्टुभाहव्ययेति व्ययोद्वादशंअष्टमंएतत्स्थानद्वयंशुद्धंग्रहरहितंयस्मि
न्एतादृशेस्वजन्मराशेर्जन्मलग्नाद्वाउपचयभवनेत्रिषडेकादशदशमराशौलग्नगतेशुभैर्दृष्टेयुतेचतथाचंद्रेत्रिषट्दशायस्थेसतिसर्वेषांशुभका
र्याणामारंभःसिध्यतितथाचवसिष्ठः उपचयभेलग्नगतेव्ययनैधनशुद्धिसंयुतेलग्ने उपचयगेशीतकरेमंगलकर्माणिकार्याणिइति ४४ अथन
क्षत्रेषुज्वरोत्पत्तौसत्यांतन्निवृत्तौदिनसंख्यांद्वितीयोपजातिकयापेंद्रवज्रयाचाह स्वातीद्रेति मूलाग्नीति स्वातीज्येष्ठापूर्वात्रयार्द्राश्लेषासुज्वरेज्वरो
त्पत्तौसत्यांमृतिर्मरणंस्यात् अर्थान्त्यमैत्रेरेवत्यनुराधयोर्ज्वरोत्पत्तौरुजोरोगस्यस्थिरताबहुकालेनरोगनिवृत्तिःस्यात्तथाभरणीश्रवणशततारा:
तक्षभंचित्राएतेषुनक्षत्रेषुशिवाघस्राःएकादशदिवसाःरोगः द्व्यधिपंविशाखा अर्कोहस्तः वासवंधनिष्ठाएतेषुत्रिषुभेषुपंचदशदिवसाःरोगः ४५

मु०टी० न०प्र० २५

मूलं अग्निः कृत्तिका दास्रमश्विनीएषुनवदिवसारोगः पित्र्यभेमघायांनखाः विंशतिर्दिवसाः बुध्न्यभंउत्तराभाद्रपदा अर्यमाउत्तराफाल्गुनी पुष्यपु
नर्वसुरोहिणीषुनगाःसप्तदिवसारोगः अजवैश्वेमृगोत्तराषाढयोः मासस्त्रिंशद्दिनानिरोगस्थैर्यंततोरोगनिवृत्तिः अत्रशांतिर्वसिष्ठोक्ताऋक्षेशरूप
कनकेनक्षत्रात्तल्लिंगमंत्रैश्चसुगंधपुष्पैः वस्त्राक्षतैर्गुग्गुलधूपदीपनैवेद्यतांबूलफलैश्चसम्यक् पूजांचकृत्वाऽभयनाशनायद्विजायदद्याद्गुलेशि
वाय आमयोरोगः अतुलमपरिमितद्रव्यं अथानंतरंयमाहि मूलभेभरण्यश्लेषामूलेषुकृत्तिकाविशाखार्द्रामघासुचसप्तनक्षत्रेषुयस्यकस्यचित्फ
णिदंशनेदर्पदंशनेनमृतिर्भवेत् अत्रसर्पदंशेयस्यएतेषुगोचरवशेनचंद्रबलंनभवतितस्यैवसर्पदंशेन यद्यत्र
चंद्रस्तस्यैवगोचरेवाशुभप्रदः तदानूनंभवेन्मृत्युः सुधासंसिक्तदेहिनइति ४६ अथशीघ्ररोगीमरणेविशिष्टयोगंद्वितीयोपजातिकयाह रौद्रा

मूलाग्निदास्रेनवपित्र्यभेनखा २० बुध्न्यार्यमेज्यादितिधातृभेनगाः ७ ॥मासो ३० ब्जवैश्वेथयमाहिमूलभेमिश्रेशपित्र्येफ
णिदंशनेमृतिः ४६ रौद्राहिशाक्राबुपयाम्यपूर्वाहिर्दिवेववसग्निषुपापवारे रिक्ताहरिस्कंददिनेचरोगेशीघ्रंभवेद्रोगिजन
स्यमृत्युः ४७ क्षिप्राहिमूलेंदुहरीशवायुभेप्रेतक्रियास्यात् त्रिषट्कुंभगेविधौ॥

हीति रौद्रादिनक्षत्रेषुपापवारेसतिरिक्ताःप्रसि
द्धाः हरिर्द्वादशी स्कंददिनंषष्ठीएतासुतिथिषु एवंविधेविशिष्टयोगेयस्यरोगोत्पत्तिर्भवतितस्यरोगिजनस्यशीघ्रंमृत्युर्भवेत् ४७ अथप्रेतदाह
मुहूर्तंप्रेतदाहादिनिषेधंचोपेंद्रवज्रयाह क्षिप्रेतिक्षिप्रादिनक्षत्रेषुप्रेतक्रियाप्रेतानांमृतानांप्रियउत्तमलोकप्राप्त्यर्थंश्राद्धादिक्रियास्यात् यदि
दाहसमयेकारणवशान्नारब्धा अथत्रिषट्कुंभगेविधौमीनकुंभस्थितेचंद्रे धनिष्ठोत्तरार्धादिपंचनक्षत्रेप्रेतस्यदाहोज्वालनंत्यजेत् चपुनः य
मदिग्गमंदक्षिणदिशिगमनंयात्रां तथाशय्यायाःखट्वायाःवितानंवयनं तथागृहगोपनंगृहाच्छादनं आदिशब्देनतृणकाष्ठसंग्रहंचत्यजे
त् ब्रह्मपुराणेपंचकेमरणमपिनिषिद्धं कुंभमीनस्थितेचंद्रेमरणंयस्यजायते नतस्योर्ध्वगतिर्दृष्टासंततेर्नशुभंभवेदिति॥ ॥

तेनपंचकेमृतस्यपंचकेदाहप्राप्तौसत्यांतनुजलविधिंकृत्वादाहः कार्यः पश्चादाशौचनिवृत्त्यनंतरंशांतिकंकार्यं यदिपंचकप्रवृत्तेः प्रागेवमृतःप्र
तिबंधवशात्पंचकेदाहप्राप्तौपुत्तलविधिमकृत्वादाहः कार्यः आशौचनिवृत्त्यनंतरंशांतिर्नकार्या एवंरेवत्यंतमृतस्यरेवतीमपहायदाहःकार्यः
नपुत्तलविधिः आशौचनिवृत्त्यनंतरंशांतिरेवकार्यः मरणनिषेधदाहनिषेधप्रतिपादकवचनद्वयसद्भावादिति ४८ अथकाष्ठानांगोमयपिं
डानांचसंग्रहमुहूर्तंशार्दूलविक्रीडितेनाह सूर्येशार्द्रसभैरितिस्पष्टार्थं ४९ अथत्रिपुष्करयोगंसफलंवसंततिलकयाह भद्रातिथिरिति भद्रा
संज्ञकतिथिर्द्वितीयासप्तमीद्वादशी शनिभौमसूर्यवारेभवति तथाद्वीशंविशाखा अर्यमोत्तराफाल्गुनी अजचरणः पूर्वाभाद्रपदा।अदितिः पुन
र्वसुः वह्निः कृत्तिका वैश्वमुत्तराषाढा एषुनक्षत्रेषुउक्ततिथिवारनक्षत्ररूपेविशिष्टयोगेसतित्रैपुष्करः त्रिपुष्कः त्रैपुष्करः स्वार्थेण त्रिपुष्करसं

प्रेतस्यदाहंयमदिग्गमंत्यजेद्धैय्याविताननंगृहगोपनादिच ४८ सूर्येशार्द्रसभैरधस्थलगतैः पाकोरसैः संयुतःशी
र्षेयुग्ममितैः शवस्यदहनंमध्येयुगैः सार्पभैः प्रागाशादिषुवेदभैः स्वसुहृदास्यात्संगमोरोगभीः कार्यादेः करणं
सुखंचगदितंकाष्ठादिसंस्थापने ४९ भद्रातिथीरविजभूतनयार्कवारेद्वीशार्यमाजचरणादितिवह्निविश्वे॥ ९॥

त्रकयोगोभवति कीदृशः मृत्युविनाशवृद्धौत्रैगुण्यदः तद्दिनेयदिकश्चिन्म्रियेततद्दायादास्त्रयोम्रियेरन् यदिकिंचिद्वस्तुविनष्टंतदातस्यतद्व
स्तुत्रयनाशः तथाकिंचिद्वस्तुलब्धंतदात्रिगुणस्तद्वस्तुलाभः वसिष्ठः रविरविजभौमवारेभद्रायांविषमपादमृक्षंचेत् त्रैपुष्करख्ययोगस्त्रिगुण
फलोयुगुलभेद्विगुणं पादानियन्नक्षत्रस्यैवचरणः पूर्वराशौचरणत्रयमपरराशौभवतितानिविषमचरणानिद्वीशार्यमेत्यादीनि अथवसुधे
निष्ठा।तक्षचित्रा चांद्रंमृगः एतानिभानिभद्रातिथयः रविशनिभौमवाराश्च अत्रापिविशिष्टयोगेद्विपुष्करनामयोगोभवति तत्फलं मृत्युविना
शवृद्धौद्वैगुण्यकृत्भवति तत्रशांतिमाहनारदः दद्यात्तद्दोषनाशायगोत्रयंमूल्यमेववा द्विपुष्करेद्वयंदद्यात्तदोषस्यसमाप्तइति॥

अत्र त्रिपुष्करे कश्यपेन रविस्थाने बृहस्पतिवारोऽप्युक्तः भद्रातिथिः शनीज्यारवारे चेद्विषमांघ्रिभं त्रिपुष्करं त्रिगुणदं द्विगुणं द्व्यंघ्रिभे मृतनाविति इद
मेव दृष्ट्वा श्रीपतिनाप्युक्तं विषमचरणधिष्ण्यमित्यादि अत्र कश्यपवाक्यं मृतावेव त्रिगुणफलतो कार्यं यत्कृतं तत्तु श्रीपतिवाक्यात्तु ऐधान्मृत्यु
विनाशहृद्वावित्युक्तं ५० अथ शवप्रतिकृतिदाहे निषिद्धकालं शार्दूलविक्रीडितेनाह शुक्रारेति एवंविधे दिने शवस्य प्रतिकृतिः पर्णशरादि
नासावयवत्वकल्पनं तस्य दाहो न कार्यः कुतः द्विविधो हि प्रेतसंस्कारः प्रत्यक्षशरीरस्यैकः तत्प्रतिकृतेरन्यः तत्र प्रत्यक्षशरीरसंस्कारे दिन
विचाराभावः गार्ग्यः प्रत्यक्षशरीरसंस्कारे दिनं नैव विशोधयेत् इति प्रतिकृतिसंस्कारे कालत्रयं आशौचमध्ये वर्षमध्ये वर्षानन्तरं चेति आशौ
चमध्ये क्रियते पुनः संस्कारकर्म चेत् शोधनीयं दिनं तत्र यथासंभवमेव तु आशौचविनिवृत्तौ चेत्पुनः संस्क्रियते मृतः संशोध्यैव दिनं ग्राह्यं ऊर्ध्वं संव

त्रैपुष्करो भवति मृत्युविनाशहृद्वौ त्रैगुण्यदो द्विगुणकृद्वसुनस्तचांद्रे ५० शुक्रारार्किषु दर्शभूतमदने नंदासु तीक्ष्णोग्रभे पौष्णे वारुण
भे त्रिपुष्करदिने न्यूनाधिमासेऽयने याम्येऽब्दात्परतश्च पातपरिघे दैवेज्यशुक्रास्तके भद्रावैधृतयोः शवप्रतिकृतेर्दाहो न पक्षे सिते ५१

त्सराद्यदीति गार्ग्यवचनाद्दिनशुद्धिरुच्यते शुक्रारार्कि दिने शुक्रभौमशनिवारे शवप्रतिकृतेर्दाहो न कार्य इति प्रत्येकं संबंधः दर्शोऽमावास्या भूतश्चतुर्दशी म
दनस्त्रयोदशी नंदाः प्रतिपत्षष्ठ्येकादश्यः आसु तिथिषु तथा तीक्ष्णोग्रभे मूलार्द्राज्येष्ठाश्लेषा तीक्ष्णानि पूर्वात्रयमघाभरण्य उग्राणि पौष्णं रेवती वरु
णं शततारा पूर्वोक्ते त्रिपुष्करदिने न्यूनाधिमासे क्षयमासे अधिकमासे अयने याम्ये अब्दात्परतः अब्दमध्ये याम्यायनेऽपि कार्यः नंदामदनभूतामा पातवैधृ
तिविष्टिषु शुक्रार्किभौमपरिघध्रुवमिश्रोग्रभैः कर्तुश्चंद्रे एव वेदात्ये जन्मप्रत्यरितारके त्रिपादभे सितपक्षेऽयने याम्येऽब्दतः परं शवप्रतिकृतेर्दाहः
शुक्रेज्यास्ताधिमासके नेष्टो मध्योद्विपान्मे नहीशादिति भगध्रुवेदिति निबंधोक्तेः दिनक्षयोऽपि वर्ज्यः कृत्येऽनुदिनक्षयमिति गार्ग्योक्तेः पातपरिघ
पातो व्यतीपातो महापातश्च परिघश्च एतेषु दाहो न कार्यः दैवेज्यशुक्रास्तके दाहो न कार्यः भद्रायां वैधृतौ च तथा सिते शुक्लपक्ष इति ५१ ॥ ॥

अथ तैनैव कंदसावर्ज्येन रण्याह जन्मप्रत्यरितारयोरिति कर्तुः जन्मप्रत्यरितारयोः जन्म नाम उत्पत्तिनक्षत्रं दशमैकोनविंशं चेति प्रत्यरितारा जन्म
भात्पंचमचतुर्दशत्रयोविंशं नक्षत्रं तथा कर्तुर्मृतिसुखांत्यके अष्टमचतुर्थे द्वादशस्थे चंद्रे सति दाहेन सत्तनप्रशस्तः अथ मध्यमनक्षत्राणि मै
त्रमनुराधा भगः पूर्वाफाल्गुनी अदितिः पुनर्वसुः ध्रुवाणि रोहिण्युत्तरात्रयं विशाखा द्व्यग्निभं मृगचित्राधनिष्ठाः तेषु धेपि शवदाहे मध्यमः अ
धमानि अर्केज्याभ्यां सहितो विधुः अर्कगुरुचंद्रवारे तथा श्रवणहस्तस्वाती अश्विनी पुष्ये षु पंचनक्षत्रेषु शवप्रतिकृते दाहः श्रेष्ठः इदमखिलमा
शौचात्परतः अनंतरं मध्ये तु यथासंभवं किंचिद्गुणांगीकारेण विचार्यं ५२ अथ मूलनक्षत्रजातस्य विशेषमुपजातिकयाह अभुक्तमिति
नारदः अभुक्तमूललक्षणं ज्येष्ठांत्यमूलादिभवं घटीचतुष्टयं जगौ ज्येष्ठांत्यघटीचतुष्टयं मूलादिघटीचतुष्टयं चेत्यर्थः नारदः योज्येष्ठामूलयो

जन्मप्रत्यरितारयोर्मृतिसुखांत्यके च कर्तुर्नेसन्मध्यो मैत्रभगादितिध्रुवविशाखाद्व्यग्निभे तेपि च श्रेष्ठोर्केज्यविधोर्दिने श्रुतिक
रस्वात्यश्विपुष्ये तथा त्वाशौचात्परतो विचार्यमखिलं मध्ये यथासंभवं ५२ अभुक्तमूलं हि घटीचतुष्टयं ज्येष्ठांत्यमूलादिभवं
हि नारदः वसिष्ठ एकद्विघटीमितं जगौ बृहस्पतिस्त्वेकघटीप्रमाणकं ५३ ,, रंतरालप्रहरजः शिशुः अभुक्तमूलजः सार्पमघानक्षत्र

योरपि अयमेव मुख्यः पक्षः कश्यपादिबहुमुनिसंवादात्तु कश्यपः ज्येष्ठांत्यमूलयोरंतरालयामोद्भवः शिशुः अभुक्तमूलजः सोथवा श्लेषापित्र्य
योरपि वसिष्ठोपि भुजंगपौरंदरपौष्णभानां तदग्रभानां च तदंतराले अभुक्तमूलं प्रहरप्रमाणं त्यजेत्सुतं तत्र भवां सुतां चेति वसिष्ठ एकद्विघटीमितं जगौ
ज्येष्ठांते एकघटिका मूलाद्यघटिकाद्वयमित्यर्थः। इदं वसिष्ठेन केचिन्मतमुक्तं यतस्तद्वाक्यं केचित् अपरे द्विनिपरोक्तेः तद्वाक्यं च ज्येष्ठांत्यपादघटिका
मितमेव केचिन्मूलं ह्यभुक्तमपरे पुनरामनंति मूलाद्यपादघटिकाद्वितयेन सार्धमृष्टे समाः परिहरेदिह जन्मभाजमिति बृहस्पतिस्तु एकघटीप्रमाण
कं जगौ ज्येष्ठांत्यार्धघटिका मूलाद्याचार्धघटिकेत्यर्थः गुरुः ज्येष्ठांत्यघटिकार्धं च मूलादौ घटिकार्धकं तयोरंतर्गता नाडी ह्यभुक्तमूलमुच्यत इति ५३

अथान्येआचार्या उपजातिकयाहुः अथोचुरन्यइति आचार्याः प्रोचुः मूलस्यप्रथमा अष्टघटिकाः शाक्रस्यज्येष्ठायाः अंतिमाः पंचनाडिका एवमुभयोरंतरालेअनयोरष्टघटिका अभुक्तसंज्ञकाः प्राचुः उक्तंचज्येष्ठांत्याघटिकाः पंचमूलाद्यावसुनाडिकाः अभुक्तमितितज्ज्ञेयंतत्रजातंशिशुंत्यजेदिति तत्फलमाह त आभुक्तमूलेजातंशिशुंबालंबालांवापितापरित्यजेत् त्यागाशक्तौवापिता अस्यबालस्याष्टसमाः अष्टौवर्षाणिमुखंनपश्येत् नारदः अभुक्तमूलजंपुत्रंपुत्रीमपिपरित्यजेत् अथवाब्दाष्टकंतातस्तन्मुखंनविलोकयेदिति अत्रघटीनांन्यूनाधिक्यकथनंदोषस्याधिक्याल्पत्वक थनार्थमिदं ५४ अथमूलाश्लेषाजातस्यचरणवशेनफलमुपजातिकयाह आद्येपितेति मूलप्रथमेचरणेजातस्यबालस्यपितानाशंप्राप्नोति द्वितीयचरणेजननीमातानाशंप्राप्नोति सापत्नमातरिमातृशब्दोगौणः तेनगौणमुख्ययोर्मुख्येकार्यसंप्रत्ययइतिजननीपदप्रयोगः तृतीयचर

अथोचुरन्येप्रथमाष्टघट्यो मूलस्यशाक्रांतिमपंचनाड्यः जातंशिशुंतत्रपरित्यजेद्वामुखंपितास्याष्टसमानपश्येत् ५४
आद्येपितानाशमुपैतिमूलपादेद्वितीयेजननीतृतीये ॥ ॰ ॥ ॰ ॥

णेधनंनश्यति चतुर्थेश्चरणोबालस्यशुभः अत्रविशेषोनारदेनोक्तः दिवाजातस्तुपितरंरात्रौतुजननींतथा आत्मानंसंध्ययोर्हंतिनास्तिगंडोनिरामयः वसिष्ठस्तु मूलाद्यपादेयदिरात्रिभागेतदात्मनोनास्तिपितुर्विनाशं द्वितीयपादोदिनगोयदिस्यात्तन्मातुरल्पोपितदास्तिदोषः अशांततरंशांत्यामूलाश्लेषाशांत्यास्तुष्टिनयासर्वत्रचरणचतुष्टयेपिशुभं अनिष्टफलनाशकंकल्याणंस्यात् शास्त्रोक्तरीत्याखलुसूतकांतेमासेतृतीयेप्यथवत्सरांतेइतिकालत्रयंवसिष्ठेनोक्तं गंडेतुविशेषः मातृगंडेसुतंजातंसूतकांतेविचक्षणः कुर्याच्छांतिंनदृसेवातद्दोषस्यापनुत्तये शिष्टास्तु सर्वत्रापि यन्नक्षत्रेजन्मतन्नक्षत्रएवशांतिरितिव्यवहरंति अथाहिभेविलोममिति आश्लेषायांमूलपादोक्तंफलंविलोमंविपरीतंज्ञेयं मूलस्यप्रथमपादेपितृनाशइत्युक्तंसोश्लेषाचतुर्थपादोत्पन्नस्य द्वितीयपादेमातृनाशःसोश्लेषातृतीयचरणे तृतीयचरणेधननाशउक्तःसोश्लेषाद्वितीयचरणे

चतुर्थचरणेशुभमुक्तं तदाश्लेषाप्रथमचरणेज्ञेयं अत्रबहुविचारोस्तिग्रंथभूयस्त्वभयान्नलिख्यते अथकैश्चिन्मूलवृक्षादिविचारउक्तः जयार्णवेमू
लंस्तंभंत्वचाशाखापत्रंपुष्पंफलंशिखामुनयोष्टौदिग्रोरुद्राः सूर्याः पंचाब्धयोग्नयः मूलेतुमूलनाशः स्यात्स्तंभेवंशविनाशनं त्वचिमातुर्भवेत् क्ले
शः शाखायांमातुलस्यच पत्रेराज्यंविजानीयात् पुष्पेमंत्रिपदंस्मृतं फलेचविपुलालक्ष्मीः शिखायामल्पजीवितं अथमूलपुरुषयोगेघटीन्या
सस्तत्रैव मूलस्यघटिकान्यासोमूर्ध्निपंचनृपोभवेत् मुखेसप्तमृतिःपित्रोः स्कंधेवेदामहाबलः बाह्वोरष्टौबलीपाण्योस्तिस्रोहत्यान्वितोभवेत् हृ
दिवेदा भूपमंत्रीनाभौद्वौब्रह्मविद्भवेत् गुह्येदशातिकामीस्याज्जान्वोःषण्महामतिः पादयोः षट्मृतिलस्यस्युक्तवान्कमलासनइति अथमूलो
द्भूतकन्यायाः फलार्थंमूलांगविभागस्तत्रैव चतस्रोनाडिकाः शीर्षंकुर्वंतिपशुनाशनं मुखेषट्धनहानिःस्यात्कंठेपंचधनागमः कोटिस्थंहृ
दयेपंचबाह्वोर्वित्तागमंततः वेदाः पाण्योर्दयांधर्मंवेदागुह्येतिकामिनी ज्येष्ठमातुलनाशश्चजंघयोर्युग्मनाडिका ज्येष्ठभ्रातृविनाशश्चचतस्रोजानु

धनंचतुर्योस्त्यशुभोयशांत्यासर्वत्रसत्स्यादहिभेविलोमं ५५ स्वर्गेशुचिप्रोष्ठपदेषुमाघेभूमौनभःकार्तिकचैत्रपौषे॥ ॥

युग्मके पादयोर्दशनाड्यश्चतत्रवैधव्यमादिशेत् इतिमूलप्रसूतायामुनिभिःफलमीरितं अथाश्लेषाजातयोःपुत्रकन्ययोरंगविभागेनफलंत
त्रैव मूर्ध्निपंचसुराज्याप्तिर्मुखेसप्तपितृक्षयः नेत्रेद्वेजननीनाशः ग्रीवायांत्रिषुलंपटः स्कंधेवेदागुरौभक्तिः हस्तेष्टौचबलीभवेत् हृद्येकादश
भिश्चात्मघातीसंजायतेनरः स्त्रीवानाभौभ्रमःषड्भिर्गुदेनवतपोधनः पादेपंचधनंदंतिसार्पोदेतत्फलंक्रमात् अथाश्लेषावृक्षोपित्तत्रैवोक्तः
फलंपुष्पंदलंशाखात्वग्लताकंदएवच सार्पवस्यादशाक्षाकस्वरविश्वार्कसागराः नाडिकास्तद्ववेबालेफलंज्ञेयंयथाक्रमं श्रीःश्रीराजभयंहानिः
मातृपित्रात्मसंक्षयइति अयंविभागोनक्षत्रस्यषष्टिघटिकात्मकोज्ञेयः न्यूनातिरिक्तेअनुपातः ५५ अथमूलनिवाससफलमिंद्रवज्रयाह स्व
र्गेइति शुचिराषाढः प्रोष्ठपदोभाद्रपदः इष आश्विनः माघःप्रसिद्धः एषुमासेषुमूलनक्षत्रंस्वर्गेस्ति श्रावणकार्तिकचैत्रपौषेषुभू॥ ॥

मीतिष्ठति तपस्यः फाल्गुनः शुक्रो ज्येष्ठः फाल्गुनमार्गशीर्षवैशाखज्येष्ठेषु अधः पाताले मूलं तिष्ठति तत्फलं च यदा मूलनक्षत्रं यस्मिन्मासे यत्रभवति तत्रैव स्वर्गमृत्युपातालेषु एव प्रोक्तं शुभाशुभफलं ददाति तेन द्व्याद्यभावे स्वर्गपातालस्थे मूले दोषाभावाच्छांतेरनावश्यकत्वं ज्ञेयं यदाहुर्भूमावेव मूलं तदा शांतिरवश्यं विधेयेति शक्तेन उक्तं च ज्योतिषार्णवे भूमिष्ठे दोषबहुलं स्वल्पमन्यत्र संस्थितमिति ज्योतिर्निबंधे मूलाश्विपित्र्यचरणप्रथमे च तूर्नपौष्णेंद्रयोश्च फणिनश्च तुरीयपादे मातुः पितुः स्ववपुषोपि करोति नाशं जातो यदा निशि दिनेप्यथ संध्ययोर्वेति तत्रापि सौम्यात्या शुभं भवतीति ज्ञेयं ५६ अथ मूलप्रसंगाद्दुष्टेषु गंडांतादिनिमित्तेषु जातस्यारिष्टपरिहारं च शार्दूलविक्रीडितेनाह गंडांतेंद्रभेति एतेषु शिशोरुत्पत्तिर्नशस्ता दुष्टफलदा गंडांतं तिथिनक्षत्रलग्नानां संधिः तल्लक्षणं ज्येष्ठापौष्णभेत्यादिना वक्ष्यति इंद्रभं ज्येष्ठानक्षत्रं शूलयोगः पातो महापातः परिघव्या

मूलं ह्यधस्तात्तु तपस्यमार्गवैशाखशुक्रेष्वशुभं च तत्र ५६ गंडांतेंद्रभमूलपातपरिघव्याघातगंडावमे संक्रांतिव्यतिपातवैधृतिसिनीवालीकुहूदर्शके ॥ वज्रे कृष्णचतुर्दशीषु यमघंटे दग्धयोगे मृतौ विष्टौ सोदरभे जनिर्न पितृभे शस्ता शुभा शांतितः ५७

घातगंडयोगाः अवमस्तिथिक्षयः संक्रांतिः सूर्यसंक्रमणपुण्यकालः व्यतीपातवैधृती योगौ सिनीवाली दृष्टेंदुरमावास्या कुहूर्नष्टेंदुरमावास्या सा दृष्टेंदुः सिनीवाली सा नष्टेंदुकला कुहूरित्यभिधानात् दर्शश्चंद्रदर्शनरहितामावास्या एतद्द्वे दोषे प्रतिपादयिष्यंते वज्रे वज्रयोगे कृष्णपक्षचतुर्दश्यां यमघंटे मघाविशाखेत्युक्तं दग्धयोगे सूर्येशपंचाग्निरसाष्टनंदा इत्युक्तेः मृतौ द्वीशात्तोयादित्युक्ते मृत्युयोगे विष्टौ भद्रायां सोदरस्य भ्रातुर्भगिन्या वा नक्षत्रे पितृभे माता च पिता च पितरौ तयोर्भे मातृभे पितृभे च एषु निमित्तेषु सुतस्य सुताया वा जन्म चेत्स्यात्तदा निष्टं कष्टं स्यादित्यर्थः दृष्टनिमित्तस्योपलक्षणत्वात् त्रीतरजन्माप्यनिष्टं सजातीयापत्यप्रसवानंतरं विजातीयापत्यप्रसवस्त्रीतरः यथा पुत्रत्रयप्रसवानंतरं कन्याजन्म कन्यात्रयप्रसवानंतरं पुंजन्म सा जनिः शांतितः वसिष्ठादिप्रोक्तशांत्या स्वनुष्ठितया शुभा परिणामसुखदायिनीत्यर्थः ५७ ॥ ॥

अथशांतयोलिख्यंते तत्रप्रथमंमूलशांतिरुच्यते॥शौनकउवाच॥अथातःसंप्रवक्ष्यामिमूलजातहितायच मातापित्रोर्धनस्यापिकुलेशांतिहि
तायचजातस्यद्वादशाहेतुजन्मर्क्षेवाशुभेदिने समाष्टकेवामतिमान्कुर्याद्वाशांतिमादरात् वसिष्ठः सुसमेपुण्यदेशेतुमंडपंकारयेद्बुधः कुंडं चत
द्बहिः कुर्याद्गृहयज्ञोक्तमार्गतः पंचामृतंपंचगव्यंपंचत्वक्पल्लवानिच उदुंबरवटाश्वत्थप्लक्षाम्रत्वक्सपल्लवाः शतौषधीमूलंशंखनवरत्ना
निमृत्तिकाः कुष्ठमांसीहरिद्रेद्वेमुराशैलेयचंदनं वचाचंपकमुस्ताचसर्वौषध्योदशैवहि गजाश्वरथ्यावल्मीकसंगमस्थानसंभवा ह्रदगोराजनग
रद्वारतश्चाष्टमृत्तिकाः शतौषधीमूलानिच अश्मरी १ सहदे २ अपराजिता ३ मुंडा ४ उशीर ५ वाला ६ अधःपुष्पी ७ शंखपुष्पी ८ ज्येष्ठीम
धु ९ कोरकः १० चक्रांकिता ११ विष्णुक्रांता १२ शिवक्रांता १३ मयूरशिखा १४ काकजंघा १५ भृंगराज १६ कुमारी १७ हय १८ कर्णिकार १९ अ
पामार्ग २० बिल्व २१ षण्मूला २२ अंबुज २३ उत्तरा २४ पुत्रजीव २५ दूर्वा २६ काश २७ कुश २८ साल २९ नाल ३० चक्रमर्द ३१ सिंही ३२ व्याघ्री
३३ अर्क ३४ प्लक्ष ३५ पलाश ३६ पिपल ३७ वट ३८ उदुंबर ३९ तुलसी ४० उत्पल ४१ शतपत्र ४२ अतसी ४३ सारिवा ४४ कदंब ४५ बकुल ४६
शमी ४७ राहिक ४८ निर्गुंडी ४९ मुंडी ५० दंडी ५१ ब्राह्मी ५२ अशोक ५३ सूर्यभक्ता ५४ रुद्रजटा ५५ कदली ५६ बीजपूरक ५७ मदनक ५८ मुस
ली ५९ पुनर्नवा ६० आम्र ६१ पाटल ६२ श्रीपर्णी ६३ करवीर ६४ चंपक ६५ गुडूची ६६ देवदारु ६७ अगरु ६८ चंदन ६९ कुटज ७० शिग्रु
७१ हरिद्रा ७२ जटामासी ७३ वचा ७४ कुष्ठ ७५ तज ७६ दारुहरिद्रा ७७ बंधुजीव ७८ सिंधुवार ७९ सटी ८० अश्वगंधा ८१ मुस्ता ८२ कुरंटक ८३
पनस ८४ जीवक ८५ जाती ८६ मालती ८७ मधूक ८८ खदिर ८९ सप्तछद ९० सिरीष ९१ काकमाची ९२ शतावरी ९३ केतकी ९४ जंबु ९५ शा
क ९६ वेतस ९७ आमलक ९८ सरल ९९ गिरिकर्णी १०० इति तिलमाषयवव्रीहिगोधूमानिप्रियंगवः चणकैः सहितासप्तसद्बीजानिचसर्वदा
वज्रमौक्तिकवैडूर्यपुष्परागेंद्रनीलकं पंचरत्नमिदंप्रोक्तं मंत्रैः कुंभेषुनिक्षिपेत् सुवर्णेनप्रमाणेनतदर्धार्धेनवापुनः निर्ऋतिप्रतिमांकुर्याद्वित्त
शाठ्यविवर्जितः अत्रविशेषः शौनकेन पलमानेनवार्धेन पादेनाथस्वशक्तितः नक्षत्रदेवतारूपंकारयित्वाविचक्षणः यद्वा मूल्यंसुवर्णस्यस्था

पयित्वा प्रपूजयेत् सुवर्णं सर्वदैवत्यं सर्वदेवात्मकोनलः सर्वदेवात्मको विप्रः सर्वदेवमयो हरिरिति वस्त्राणि षोडशाष्टौ च शुक्लसूक्ष्माण्यतंद्रितः ब्रा
ह्मणान्वरयेत्पश्चात्स्वस्तिवाचनपूर्वकं श्रोत्रियाश्चतुरो वाष्टौ द्वादशाथ षोडश प्रधानाचार्यमेतेषां श्रेष्ठं तत्प्रतिमार्चने ईशानादिचतुःकोणे चाव्रणा
न्जलपूरितान् पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्तवर्णकान् विप्रान्पृथक्पृथक्चापि मधुपर्कादिनार्चयेत् द्वारेषु जापकानष्टौ द्वौ द्वौ च वरयेत्पुनः॥
अब्लिंगैर्वारुणैर्मंत्रैः शुक्लपुष्पाक्षतादिभिः ततः कुंभे जलं स्पृष्ट्वा कुशकूर्चैर्जपेदिति रुद्रसूक्तं च भद्राग्नेरानो भद्रा इतिक्रमात् पुरुषसूक्तं च तन्मंत्रैर्दे
वान्ध्यात्वा प्रयत्नतः गोमूत्रं गोमयं क्षीरं दधिसर्पिः कुशोदकं पंचगव्यमिदं कुंभे क्षिपेद्गजमदान्वितं रजतं कांचनं ताम्रं विद्रुमं तीर्थवारि च निक्षिपे
द्धेममूलं च दशाष्टयवनिर्मितं देवदारु च शैलेयं पद्मं नीलोत्पलं तथा वचां लोध्रं प्रियंगुं च शतछिद्रे घटे क्षिपेत् वंशपात्रोपरिन्यस्तं शतछिद्रे घ
टे स्थितं ततश्च निर्ऋतिं देवमर्चयेत्पश्चिमामुखं मोषुणस्त्विति मंत्रेण शुक्लवस्त्राक्षतादिभिः मूलरूपं विधातव्यं श्यामं कुणपवाहनं खड्गखे
टधरं चोग्रं द्विभुजं चट्टकाननं स्थापयेत्तं ग्रहांश्चैव वस्त्रगंधादिभिर्यजेत् चरुं च श्रपयेत्तत्र नैर्ऋतं दुष्कृतापहं तत्र चत्वारः कुंभाश्चतुर्दिक्षु स्था
प्याः एकः कुंभो रुद्रस्थापनार्थमन्यः स्थाप्यः एकः शतछिद्रः कुंभः तस्मिन्कुंभे देवदारु शैलेयमित्याद्यौषधानि तथा सुवर्णमूलं च अष्टादशयव
परिमितं निक्षिप्य तदुपरि वंशादिपात्रं निधाय तदुपरि वस्त्रं निधाय तत्र निर्ऋतिप्रतिमां इंद्रप्रतिमां च प्रतिमासहितां स्थापयेत् ततः षोडशोप
चारैः पंचोपचारैर्वा पूजयेत् उक्तं च शौनकेन पुण्यैरभिमंत्रितैः तोयैः प्रोक्षितायां क्षितौ ततः तत्रोदकुंभं सुश्लक्ष्णं रक्तं व्रणविवर्जितं अकृष्णमूलं
निर्णिक्तं पूजयेन्निर्मलांभसा आकलशेष्वित्यनया कलशस्थापनं शुभं इमंमहृति मंत्रेण पूरयेत्तीर्थवारिणा कुंभं च वस्त्रगंधाद्यैस्तत्तन्मंत्रैः प्रपूरये
त् याः फलिनीरित्यनया क्षिपेद्रत्नौषधादिकं वस्त्राद्यवगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा कूर्चं हेमसमायुक्तं चूतपल्लवसंयुतं स्वस्तिकोपरि विन्यस्य
क्षीरद्रुमसपल्लवैः द्रोणव्रीहींश्च निक्षिप्य ईशाने च निधापयेत् पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितं अर्चितं गंधपुष्पाद्यैः श्रीरुद्रं तत्र संज
पेत् तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककं रक्षामंत्रं तथा पुण्यं रक्षोघ्नं च स्पृशन् जपेत् त्र्यंबकं जपेत्सम्यगष्टोत्तरसहस्रकं एकवारं तथा जा

पीपावमानीस्तथाञ्जपेत् जपस्यपंचकुंभाश्चहूयंवानदलाभतः श्रीरुद्रस्यैककुंभंचसर्वेसूक्तानितत्रतु तथान्यंपंचमंकुंभंपूर्वोक्तैर्लक्षणैर्युतं चतुः
प्रस्रवणंकुर्यात्पंचवक्त्रंचतद्भवेत् वस्त्रावगुंठितंकुर्यात्पूरयेत्तीर्थवारिणा पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं एतस्मिन्नपिपंचरत्नसप्तमृत्तिकाश्च
तमूलदेवदारुप्रभृत्योषधिहेममूलानिक्षिपेत् तत्रयत्तमूलालाभे विष्णुक्रांतासहदेवीतुलसीचशतावरी मूलानीमानिगृह्णीयाच्छतलाभेविशेष
तःतस्योपरिन्यसेत्पात्रंस्वर्णंवारौप्यमृन्मयंशुद्धवस्त्रेणसंछाद्ययत्तमूलानिनिक्षिपेत् कुंभोपरिन्यसेद्विद्वान्मूलनक्षत्रदैवतं अधिप्रत्यधिदैवौच
दक्षिणोत्तरदेशयोः अधिदेवंजपेदादौज्येष्ठानक्षत्रदैवतं एवंप्रत्यधिदेवंचपूर्वाषाढर्क्षदैवतं स्वलिंगोक्तैश्चमंत्रैश्चप्रधानादीन्प्रपूजयेत् पंचामृ
तेनसंस्नाप्यआवाह्यायसमर्चयेत् उपचारैःषोडशभिर्यद्वापंचोपचारकैः रक्तचंदनगंधाद्यैःपुष्पैःकुसुमसितादिभिः मेषशृंगादिधूपैश्चघृतदी
पैस्तथैवच सुरापालिकमांसाद्यैः नैवेद्यैर्भोजनादिभिः मत्स्यमांससुरादीनिब्राह्मणानांविवर्जयेत् सुरास्थानेप्रदातव्यंक्षीरेसैंधवमिश्रितं पायसंलव
णोपेतंमांसस्थानेप्रकल्पयेत् उक्तगंधाद्यलाभेतुयथालाभंसमर्चयेत् पुष्पांततुसमभ्यर्च्यहोमंकुर्याद्यथोदितं निर्वापप्रोक्षणादीनिचरोःकुर्या
द्यथाविधि हविर्गृहीत्वाविधिवन्नेत्रेत्र्यंबकत्वाहुनेत् अत्रवसिष्ठेनविशेषोभिहितः मूलंप्रजामितिमंत्रद्वयस्यकण्वऋषिर्निर्ऋतिर्देवताअनु
ष्टुप्छंदः मूलायस्वाहा प्राजापत्यस्वाहेत्युपहोममंत्रौ पलाशसमिदाज्येनचरुणाष्टसहस्रकं अथवाष्टोत्तरशतंप्रत्येकंजुहुयात्ततः मूलंप्र
जामित्यष्टाभिर्वाक्यैर्मंत्रद्वयेनच सावित्रसौम्यनैर्ऋत्यमंत्रैरेभिस्त्र्यसंभवैः समिद्भिश्चतिलव्रीहीन्हुत्वाव्याहृतिभिस्ततः मूलंप्रजामित्यष्टौवाक्या
न्यर्चेकोजपेत् अष्टोत्तरसहस्रंवाशतंवानियतात्मवान् अयंहोमप्रकारस्तुशाखांतरविषयोध्येयः मोषुणःपरापरैतियत्तेदेवेतिवापुनः पाप
संधत्तसंमिश्रंहुनेदष्टोत्तरंशतं समिदाज्यचरूंस्पृष्ट्वाछक्तितःसंख्ययाहुनेत् अधिदैवतयोश्चैवजुहुयात्स्वस्वमंत्रकैः नक्षत्रदेवताभ्यश्चपाय
सेनतुहोमयेत् कृणुष्वेतिपंचदशभिर्जुहुयात्कृसरंततः गायत्र्याजातवेदसेत्रियंबकमितिक्रमात् सीरायुंजंतिनामग्निंवास्तोष्पत्यग्निमेवच
क्षेत्रस्यपतिनागणानांग्निंदूतंतथैवच श्रीसूक्तेनतथाविद्वान्समिदाज्यचरून्क्रमात् अष्टोत्तरशतैर्वाथअष्टाविंशतिभिःक्रमात् अष्टाष्टसंख्य

यावापिजुहुयाद्भक्तितोबुधः त्वंनः सोमेनपायसंजुहुयात्तुत्रयोदश चतुर्गृहीतमाज्यंचयातेरुद्रेतिमंत्रतः स्रुवेणजुहुयादाज्यंमहाव्याहृतिभिः क्र
मात् हुत्वास्विष्टकृतंपश्चात्प्रायश्चित्ताहुतीर्हुनेत् आचार्योयजमानोवाप्यग्नौपूर्णाहुतिंहुनेत् होमशेषंसमाप्याथवह्निमारोपयेत्ततः कुंभाभिमंत्र
णंकुर्याद्दक्षिणेनाभिमंत्रयेत् मृत्युप्रशमनार्थायजपेत्त्र्यंबकंशतं रुद्रकुंभोक्तमार्गेणरुद्रमंत्रंस्पृशञ्जपेत् धूपंदीपंचनैवेद्यंकुंभयुग्मेनिवेदये
त् प्रसादयेत्ततोदेवमभिषेकार्थमादरात् भद्रासनोपविष्टस्ययजमानस्यऋत्विजः दारपुत्रसमेतस्यकुर्युः सर्वेभिषेचनं अक्षीभ्यामितिसूक्तेन
पावमानीभिरेवच आपोहिष्ठेतिनवभिरापइद्वाहृयेनच सहस्राक्षशतेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवक्ष्यमाणैश्चमंत्रकैः योसौ
वज्रधरोदेवोमहेंद्रोगजवाहनः मूलजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः सप्तजिह्वश्चदेवोग्निर्मूलदोषंव्य
पोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः मूलजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामयतुमू
लोत्थंदोषंगंडांतसंभवं योसौपाशधरोदेवोवरुणश्चजलेश्वरः नक्रवाहः प्रचेतास्तोमूलोत्थाघंव्यपोहतु योसौदेवोजगत्प्राणोमारुतोमृगवा
हनः प्रशामयतुमूलोत्थंदोषंबालस्यशांतिदः योसौनिधिपतिर्देवः खड्गभृन्नरवाहनः मातापित्रोः शिशोश्चैवमूलदोषंव्यपोहतु योसौपशु
पतिर्देवः पिनाकीवृषवाहनः आश्लेषामूलगंडांतदोषमाशुव्यपोहतु विघ्नेशः क्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदोषप्रशमनंसर्वेकुर्वंतु
शांतिदाः तत्कुंभयोरभिषेकंतुसर्वदोषोपशांतिदं सर्वकामप्रदंदिव्यंमंगलानांचमंगलं वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ततः शुक्लांब
रधरः शुक्लमाल्यानुलेपनः यजमानोदक्षिणाभिस्तोषयेद्धविगादिकान् धेनुंपयस्विनींदद्यादाचार्यायसवत्सकां निर्ऋतिप्रतिमांकुंभवस्त्रेहेमं
चदापयेत् ग्रहार्थवस्त्रप्रतिमास्तस्मैदद्यात्प्रयत्नतः श्रीरुद्रजापिनेदेयः कृष्णोनड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमास्तस्मैदद्यात्प्रयत्नतः उक्ता
लाभेततोदद्यादाचार्यब्रह्मऋत्विजां तत्तन्मूल्यंप्रदातव्यंशक्त्यावाथप्रदापयेत् दद्यादन्नंपायसादिब्राह्मणान्भोजयेत्ततः अलाभेसतिपंचाश
द्दशकंतदलाभतः सर्वशांतेश्चपठनमाशिषांग्रहणंतथा गृहीसमापयेद्विद्वान्निर्ऋतिः प्रीयतामिति इतिशौनकीयमूलशांतिः ॥ ॥

अथाश्लेषाशांतिरप्येवमेवकार्या तत्रविभवेपूर्वोक्तवत्पंचकुंभाःस्थाप्याः असंभवेकुंभद्वयं एकत्ररुद्रस्थापनं द्वितीयेआश्लेषाप्रतिमास्थापनं अ
भिमंत्रणादिपूर्ववत् तत्राश्लेषाप्रतिमासर्पाकारा अधिदैवतबृहस्पतिप्रतिमा प्रत्यधिदैवतपितृप्रतिमास्थाप्यापूज्याच नमोस्तुसर्पेभ्यइतिपूजा
मंत्रइतीरितः सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवस्त्रकःफणकाधिधरस्तीक्ष्णोदिव्याभरणभूषितः एवंध्यात्वाततोभ्यर्च्यहोमकर्मसमारभेत् अ
भिषेकेविशेषः आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु पितरःसर्वभूतानांरक्षंतुपितरःसदा सा
र्पनक्षत्रजातस्यविनंचशांतिबाधवान् सर्पाधीशनमस्तुभ्यंनागानांचगणाधिप गृहाणार्घ्यंमयादत्तंसर्वारिष्टप्रशांतये इत्यर्घ्यमंत्रः मूलनक्षत्र
वत्कुर्यात्सर्वदोषेसनामतः एतच्चमूलाश्लेषाशांतिकद्वयंविवाहेउपस्थितेश्वशुरश्वश्रूश्वसत्वेमूलाश्लेषोत्पन्नयोरपिवधूवरयोस्तत्तदरिष्टनि
वृत्त्यर्थंविधेयं उपलक्षणत्वाच्चज्येष्ठाविशाखोत्पन्नायावध्वावरस्यज्येष्ठबंधुकष्टशांतयेच नारदः मूलजाश्वशुरंहंतिव्यालजाचतदंगना ऐंद्री
पत्यग्रजंहंतिदेवरंतुद्विदैवजा शांतिर्वापुष्कलाचेत्स्यात्तर्हिदोषोनकश्चनेति इत्याश्लेषाशांतिः अथगंडशांतिः गंडशांतिंप्रवक्ष्यामिसोममंत्रेण
भक्तिमान् कांस्यपात्रंप्रकुर्वीतपलैःषोडशभिर्नवं अष्टाभिश्चचतुर्भिर्वाद्व्याभ्यांवाशोभनंतथा तन्मध्येपायसंसंस्थेनवनीतेनपूरिते राजतंच
द्रमभ्यर्च्यसितपुष्पसहस्रकैः देवतःशुक्लवासास्तुशुक्लमाल्यावरार्चितः सोमोहमितिसंचिंत्यपूजांकुर्यादतंद्रितः दद्याद्दक्षिणामिष्टांगंडदोष
प्रशांतयेशुक्लांवागीश्वरंचैवताम्रपात्रसमन्वितं गंडदोषापशांत्यर्थंदद्याद्दविदेशुचिः अत्रापिपूर्ववत्प्रतिमाकलशहोमाभिषेकादिकंकार्यं
तिथिगंडेत्वनड्वाहंनाक्षत्रेधेनुरुच्यते कांचनंलग्नगंडेतुगंडदोषोविनश्यति आद्यभागेपितुर्गंडेत्रयाणामभिषेचनं इतरत्रशिशोर्मातुरभि
षेकंचकारयेत् अन्यच्चउत्पत्तितिष्यचित्रासुपूर्वाषाढोद्भवस्यच कुर्याच्छांतिंप्रयत्नेनक्षत्राकारजांबुधः चित्राद्यर्द्धेपुष्यपादेद्वितीयेपूर्वाषाढाधि
ष्ण्यपादेतृतीये जातःपुत्रश्चोत्तराद्येविघातीमातापित्रोर्भ्रातुरप्यात्मनश्च द्विमासस्थोत्तरादोषःपुष्यश्चैवत्रिमासिकः पूर्वाषाढाष्टमेमासिचित्रा
षाण्मासिकंफलं नवमासंतथाश्लेषामूलेचाष्टौसमाःस्मृताः ज्येष्ठामासेपंचदशेपुत्रदर्शनवर्जिता उत्तरेतिलपात्रंस्यात्तिष्येगोदानमिष्यते अ

जांचित्रासुवैदेयापूर्वाषाढेतुकांचनं यवांश्चव्रीहिमाषांश्चतिलमुद्गांश्चदापयेत् यथावित्तानुसारेणकुर्याद्ब्राह्मणभोजनं पितुरायुष्यवृद्ध्यर्थंशांतिर
त्रविधीयते इतिगंडांतादिशांतिः अथज्येष्ठाशांतिः भरद्वाजः ज्येष्ठादौमातृजननींमातामहंद्वितीयके तृतीयेमातुलंहंति चतुर्थेजननींतथा आत्मानंपं
चमेहंतिषष्ठेगोत्रक्षयोभवेत् सप्तमेकुलनाशःस्यादष्टमेज्येष्ठसोदरः नवमेश्वशुरंहंतिसर्वेस्वंदशमेतथेति प्रत्येकंघटिकाषट्कस्यफलमुक्तं अत्रापिमूलं
शांतिवत्सर्वंकार्यं तत्रविशेषःघटिकैकाचमेत्रांतेज्येष्ठादौघटिकाद्वयंतयोः संधिरितिज्ञेयंशिशुगंडांतमीरितं ज्येष्ठान्यपादस्तुपितुःस्वस्यचापिविनाशकः ज्ये
ष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधवाग्रजं शांतिंतस्यप्रवक्ष्यामिगंडदोषप्रशांतये तत्रचतुर्दिक्षुकुंभचतुष्टयंसंस्थाप्यतन्मध्येशतच्छिद्रंपंचमंकुंभंसंस्था
प्यपूर्ववत्पूजादिविधायतत्र वज्रांकुशधरंदेवमैरावतगजान्वितं कुर्याच्छचीपतिंरम्यंदेवेंद्रंसुरनायकं शालितंडुलसंपूर्णकुंभस्योपरिपूजयेत् इंद्रायें
द्रोमरुत्वतइतिमंत्रेणवाग्यतः पूजयेद्विधिनासम्यग्लोकपालगणान्वितं रक्तवस्त्रद्वयोपेतंदेवराजंशचीपतिं पूजयेद्वारुणैर्मंत्रैः कुंभान्धीमान्प्रयत्नतः त्र्यंबो
अमेनजपेदादौसप्तत्वन्नोपिद्वितीयकेसमुद्रज्येष्ठाइतिचेमंमेगंगेचतुर्थकं पूजयेद्वस्त्रगंधाद्यैश्चतुरःकलशानपि आनोभद्राअष्टपंचादौभद्राअग्नेद्वितीयकंरु
द्रसूक्तंरुद्रजाप्यंजपेन्मृत्युंजयंततः समिद्भिर्ब्रह्मवृक्षस्यशतमष्टोत्तरंशतं सर्पिषाचरुणाचैवमूलमंत्रेणवाग्यतः हुनेज्जाप्यंचतेनैवयतइंद्रभयामहेतिच ति
लान्व्याहृतिभिर्हुत्वाशतमष्टोत्तरंपृथक् ततोभिषेकः ततोरूपंरूपमितिमंत्रेणतच्चक्षुरितिमंत्रेणआज्यावलोकनं पुनर्देवतापूजनंकृत्वा नमोस्तुसुरना
यायनमस्तुभ्यंशचीपते गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये अष्टोत्तरशतंसंख्या कुर्याद्ब्राह्मणभोजनं अन्यत्सर्वंतुपूर्ववत् इतिज्येष्ठाशांतिः दिनक्षये
व्यतीपातेव्याघातेविष्टिवैधृतौ शूलेगंडेचपरिघेवज्रेचयमघंटके कालगंडेमृत्युयोगेदग्धयोगसमन्विते तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते अ
तिदोषकरीप्रोक्तातत्रपापयुतेसति विचार्यतत्रदैवज्ञः शांतिंकुर्याद्यथाविधि यजनंदेवतानांचग्रहाणांचैवपूजनं दीपंशिवालयेभक्त्यागोघृतेनप्रदा
पयेत् अभिषेकंशंकरायअश्वत्थस्यप्रदक्षिणं अभीष्टफलसिध्यर्थंकुर्याद्ब्राह्मणभोजनं गणापत्यंपुरुषसूक्तंसौरंमृत्युंजयंशुभं शांतिजाप्यंपु
नश्चैवकृत्वामृत्युंजयीभवेत् इत्युत्तरगार्ग्येदुष्टयोगशांतिः कुमारजन्मकालेतुव्यतीपातश्चवैधृतिः संक्रांतिश्चरवेस्तत्रजातोदारिद्र्यकारकः

नवग्रहमखंकुर्यात्तस्यदोषस्यशांतये प्रथमंगोमुखाज्जन्मनतः शांतिंसमाचरेत् गृहस्यपूर्वदिग्भागेगोमयेनानुलिप्यच अलंकृतेतस्यदेशेतुव्रीहिरा
शिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्धंतंडुलेनच तदर्धंतुतिलैः कुर्यादन्योन्योपरिकल्पयेत् द्व्यन्नितयराशौतुअष्टपत्रंलिखेद्बुधः पुण्याहवा
चयित्वातुआचार्यंवरयेत्तुराशौप्रतिष्ठितंकुंभमव्रणंसुमनोहरं तीर्थोदकेनसंभृत्यसमृदौषधिपल्लवं पंचगव्यंपंचरत्नंवस्त्रयुग्मेनवेष्टयेत् त
स्योपरिन्यसेत्पात्रंसूक्ष्मवस्त्रेणसंयुतं प्रतिमांस्थापयेत्पश्चात्साधिप्रत्यधिदेवतां चंद्रादित्याकृतीपार्श्वेमध्येवैधृतिमर्चयेत् एवमेवव्यतीपात
शांतौसंक्रमणस्यच अधिदेवंभवेत्सूर्यः चंद्रः प्रत्यधिदेवतं तत्तद्व्याहृतिपूर्वेणतत्तन्मंत्रेणपूजयेत् त्रियंबकेनमंत्रेणसोमपूजासमाचरेत् उ
त्सूर्यइतिमंत्रेणसूर्यपूजासमाचरेत् आप्यायस्वेतिमंत्रेणसोमपूजासमाचरेत् तत्राष्टोत्तरसहस्रं अष्टोत्तरशतंवा अष्टाविंशतिसंख्याजपंसर्व
सौरजपंच आनोभद्रा अग्नेइतिसूक्तंपुरुषसूक्तंत्रियंबकं एतान् मंत्रान् कुंभान् स्पृष्ट्वाचतुर्दिक्षुजपंकुर्युः त्रियंबकेनमंत्रेणसमिदाज्यचरू
न्हुनेत् अष्टोत्तरसहस्रं अष्टोत्तरशतं अष्टाविंशतिर्वा मृत्युंजयेनमंत्रेणतिलहोमंसमाचरेत् ततः समुद्रज्येष्ठाश्च आपोहिष्ठेत्यृचेनच अक्षीभ्यामि
तिसूक्तेनपावमानीभिः त्रियंबकेन उत्सूर्येति आप्यायस्वेतिवैदिकमंत्रैः सुरास्त्वामभिषिंचंत्वित्यादिकैः पौराणमंत्रैश्चाभिषेकंकुर्यात् ततआज्यावे
क्षणं अन्यद्दक्षिणादानादिकंपूर्ववत् इत्युत्तरगार्ग्येव्यतीपातवैधृतिसंक्रांतिशांतिः अथकुहूसिनीवालीदर्शशांतिः तत्रयस्याः कस्याश्चिद
मावास्यायाः अष्टौभागान्कृत्वाप्रथमविभागेचंद्रदर्शनमस्तिनवेतिविचार्य यदाचंद्रदर्शनंतदासिनीवाली यदाचंद्रादर्शनंतदादर्शः सकलचंद्र
क्षयस्तदाकुहूरित्यर्थः तदुक्तंछंदोगपरिशिष्टे इंदुक्षयकालः श्राद्धकालइतिप्रस्तुतेंदुक्षयकालपरिगणनमुक्तं अष्टमेंशेचतुर्दश्याः क्षीणाभ
वतिचंद्रमाः अमावास्याष्टमेभागेपुनः किलभवेदणुः अनेंदुराद्येप्रहरेचतिष्ठेत् चतुर्थभागोनकलावशिष्टः तदंतएवक्षयमेतिकृत्स्नः एवंहिज्यो
तिश्चक्रविदोवदंतीति एतत्कारिकाव्याख्यानंतद्भाष्यकारेणकृतं प्रहरनवात्मकश्चंद्रक्षयकालइति तत्रामायाः सप्तमाष्टमप्रहरौकृत्स्नक्षय
कालः चतुर्दशीशेषयामदर्शादियामौचचंद्रसूक्ष्मताकालइति तत्रायमंत्रविषयविवेकः यस्याममावास्यायांप्रथमप्रहरेशास्त्रात्प्रत्यक्षतो

वाचंद्रदर्शनंस्यात्सासिनीवालीसर्वदासिद्धा तत्रोत्पन्नस्यसिनीवालीशांतिर्विधेया अथतस्यामेवामावास्यायांयदानष्टेंदुकलात्वंसचकृत्स्नक्षयका
लोमावास्यायांअंतिमक्षणएव तस्यचसंक्रांतिसमयवदतिसूक्ष्मत्वेनदुर्ज्ञेयत्वात् अमावास्यायाःसप्तमाष्टमप्रहरयोःकृत्स्नक्षयकालस्यभाष्यका
रेणपरिभाषितत्वात् सप्तमाष्टमप्रहरात्मकःकालःकुहूशब्दवाच्यस्तत्रोत्पन्नस्यकुहूशांतिः पुनस्तस्यामेवामावास्यायांप्रथमप्रहरानंतरंसप्तमप्रह
रादर्वाक्प्रहरपंचकात्मकःकालोदर्शशब्दवाच्यइति तत्रोत्पन्नस्यदर्शशांतिर्विधेयेति एवमेकस्यामेवामावास्यायांकालभेदेनत्रयंसंभवति
यदात्वमावास्यायांचंद्रदर्शनाभावःतदाद्वयमेवदर्शत्वकुहूत्वरूपंसंभवतीति अत्रकेचिच्चतुर्दशीशेषेचंद्रदर्शनेसतिपरदिनेयाऽमावास्यासासिनीवा
लीइत्याहुस्तन्न दृष्टश्चंद्रोयस्यामिति अन्यपदार्थस्यअमावास्यारूपस्यैवसमानाधिकरण्येनग्रहणात् किंचसिनीशब्देनश्वेताचंद्रकलावर्णवाचिनः
श्वेतशब्दाद्वर्णादनुदात्तात्तोपधात्तोनइतिङीपूनकारेसिनीतांवलतेप्राप्नोतीतिसिनीवालीतिव्युत्पत्तिश्च चतुर्दश्युदितचंद्राश्रयायाममावा
स्यायांनयुज्यतेइतिच तस्माद्दृष्टेंदुःसिनीवालीत्यमावास्यैवाभिधीयतइत्येवज्यायः अथगोलगणितविदोऽन्यथास्मादधुः तत्रस्याद्दृष्टेंदुःसिनी
वालीत्यादौउदयास्ताधिकारोक्तरीत्यादृक्कर्मद्वयसंस्कृतस्यदर्शनयोग्यत्वेसतिप्राक्क्षितिजक्रांतिवृत्तसंबंधवत्त्वंग्रहादेर्दर्शनशब्दवाच्यमेघा
द्यावरणेतुशास्त्रीयदर्शनेदृशिवर्तते आत्माद्रष्टव्यइत्यादिवत् तथैवदर्शनायोग्यत्वेसतिप्राक्क्षितिजसंबंधवत्त्वमदर्शनशब्दवाच्यमित्यदर्श
नलक्षणं अतश्चंद्रदर्शनलक्षणवत्यमावास्यासिनीवालीनाम चंद्रादर्शनलक्षणवत्यमावास्याकुहूर्नाम लक्षणद्वयानाक्रांताऽमावास्यादर्श
शब्दवाच्यइति अयमाशयः यदामावास्यासूर्योदयात् प्राक्घटिकात्रयवर्तीतदादृक्कर्मसंस्कारवशेनचंद्रस्यदृश्यत्वमागतंचेत्तदासासंपूर्णाऽमा
वास्यासिनीवालीनाम तादृश्याममायांद्वितीयसूर्योदयावधिकायामुत्पन्नस्यारिष्टशांतयेसिनीवालीशांतिस्तत्फलंचादेश्यं अथतिथिवृद्धौवातस्या
अमावास्याद्वितीयसूर्योदयानंतरमवशिष्टामावास्याघटीषूत्पन्नस्यकुहूशांतिरेव चंद्रादर्शनलक्षणसत्वात् यदिसैवामावास्यासूर्योदयात् प्रा
क्घटिकात्रयचतुष्टयंवाप्रतिपत्संबंधा तदासिनीवाल्येव. अथतादृश्यांन्यूनायामधिकायांवाऽमावास्यायांतुदृक्कर्मसंस्कारवशेनचंद्रस्यादृश्यत्व

मागतंसामावास्यासंपूर्णाकुहूर्नाम चंद्रादर्शनलक्षणसत्वात् तत्रापिकुहूशांतिरादेश्या यदातुसूर्योदयादनंतरंकियतीषुचित्रासुघटीषु अतिक्रांता
सुअमावास्याप्रवृत्तिः पूर्वंचतुर्दश्यवास्थिनातस्यामुषसिदृक्कर्मैव शतश्चंद्रोदृष्टोमावादर्शिन थाप्यमावास्यायांचंद्रदर्शनलक्षणानाक्रांतत्वात्सासंपू
र्णामावास्यादर्शोनाम तत्रदर्शजननशांतिर्विधेयेति एवममावास्याभेदेनसिनीवालीकुहूदर्शरूपंपक्षत्रयंसावकाशमितिगोलज्ञानांमतं अथ
प्रकारांतरेणसिनीवालीसर्ववादिसिद्धासैव कुहूस्तुपरिभाषिकी यदाहवसिष्ठः नक्षत्रेयस्यदर्शांतोविषनाड्यांभवेद्यदि कुहूयोगइतिख्यातोव्या
धिमृत्युभयादिकृत् अयमर्थः यस्मिन्नक्षत्रेयाविषनाड्याउक्तास्तस्मिन्कालेयदिदर्शस्यचरमघटिकाभवेत्तन्नक्षत्रंचयस्यपुरुषस्यजन्मनक्षत्रं
जन्मकालेकालांतरेवास्यात्तस्यपुंसोव्याधिमृत्युकृत् कुहूयोगोज्ञेयः तत्रकुहूजननफलंशांतिश्चस्यात् कालांतरेपिकुहूयोगसंभवेशांतिर्विधेया
अतएवजगन्मोहने यस्यजन्मर्क्षगश्चंद्रोविषनाड्यांकुहूर्भवेत् अभिचारेणकिंतस्यस्वयमेवमरिष्यतीति अतोविषघटिकातः पूर्वकालोदर्श
शब्दवाच्यइति एवंप्रकारत्रयेणसिनीवालीकुहूदर्शानांभेदउपादितस्तत्रयथासंप्रदायंव्यवस्थेत्यलमतिप्रसंगेन अथशांतिप्रकारः सिनीवा
ल्यांप्रसूतास्याद्यस्यभार्यापशुस्तथा गवाश्वमहिषीचैव शक्रस्यापिश्रियंहरेत् येचसंतिद्विजाश्चान्येतत्प्रसादोपजीविनः वर्जयेत्तान्शेषांस्तुपशु
पक्षिमृगादिकान् द्विजाः पक्षिणः कुहूप्रसूतिरत्यर्थंसर्वदोषकरीमता यस्यप्रसूतिरेतेषांतस्यायुर्धननाशिनी नारींविनाचशेषाणांपरित्यागो
विधीयते परित्यागात्तत्रशांतिंकुर्याद्यत्नाद्विचक्षणः प्रतिमाकारयेच्छंभोश्चतुर्भुजसमन्वितं त्रिशूलखड्गवरदाभयहस्तांयथाक्रमात् श्वेतवर्णां
श्वेतपुष्पांश्वेतांबरधरांस्थितां त्र्यंबकेनमंत्रेणपूजांकुर्याद्यथाविधि इंद्रश्चतुर्भुजोवज्रांकुशचापससायकः रक्तवर्णोगजारूढोयतइंद्रेतिमंत्र
तः पितरः कृष्णवर्णाश्चचतुर्हस्ताविमानगाः यष्टिसूत्रकमंडलुभयानांचधारिणः येसत्याइतिमंत्रेणपूजांकुर्यादनंतरं कलशस्थापनपूजादि
पूर्ववत् समिदाज्यचरोर्होमंतिलमाषैश्चसर्षपैः अश्वत्थपलाशसमिद्भिः खादिरैः शुभैः अष्टोत्तरशतंमुख्यंप्रत्येकंजुहुयाद्बुधः त्रियंबके
नमंत्रेणतिलान्व्याहृतिभिर्हुनेत् शंकरस्याभिषेकंचकुर्यादाज्यावलोकनं अन्यत्सर्वमभिषेकादिपूर्ववत् इतिसिनीवालीकुहूशांतिः ॥ ॥

अथदर्शशांतिः अथातोदर्शजातानांमातापित्रोर्दरिद्रता तद्दोषपरिहारायशांतिंवक्ष्यामिनारद तत्रसंकल्पंविधायतन्मध्येकलशंसंस्थाप्य तन्मध्ये
निक्षिपेद्द्रव्यंदधिक्षीरघृतादिकं न्यग्रोधोदुंबराश्वत्थः सचूतानिंबकास्तथा एतेषांवृक्षमूलानांत्वगादीन्पल्लवांस्तथा पंचरत्नानिनिक्षिप्यवस्त्र
युग्मेनवेष्टयेत् तत्रसर्वेसमुद्राइति आपोहिष्ठात्दृचेनेतिकयानश्चित्रऋचा यत्किंचेदमृचाचैवसमुद्रज्येष्ठऋचा अभिमंत्र्योदकुंभंत
मग्नेः पूर्वेनिधापयेत् दर्शश्चदेवतायाश्चसोमसूर्यस्वरूपकाः प्रतिमांस्वर्णजांनित्यंरजतींताम्रजांतथा आप्यायस्वेतिमंत्रेणसवितापश्चा
त्तमेवच उपचारैः समाराध्यततोहोमंसमाचरेत् समिधश्चचरुद्रव्यक्रमेणजुहुयाद्वही हुनेत्सवितृमंत्रेणसोमोधेनुंचमंत्रतः अष्टोत्तरशतंवा
प्यष्टाविंशतिसंख्यया अभिषेकादिपूर्ववत् हिरण्यरजतंचैवकृष्णाधेनुश्चदक्षिणा ब्राह्मणान्भोजयेत्तत्रकारयेत्स्वस्तिवाचनं इतिद
र्शशांतिः कृष्णपक्षेचतुर्दश्याः प्रसूतेःषड्विधंफलं चतुर्दशींचषड्भागांकुर्यादादौशुभंस्मृतं द्वितीयेपितरंहंतितृतीयेमातरंतथा चतुर्थेमातु
लंहंतिपंचमेवंशनाशनं षष्ठेतुधनहानिःस्यादात्मनोवंशनाशनं तस्मात्सर्वप्रयत्नेनशांतिंकुर्याद्विधानतः प्रतिमांकारयेच्छंभोः कर्षमात्रसुवर्णतः
तदर्धार्धेनवाकुर्यात्सर्वलक्षणसंयुतां वृषभेचसमासीनंवरदाभयपाणिकं शुद्धस्फटिकसंकाशंश्वेतमाल्याम्बरान्वितं त्र्यंबकेनमंत्रेणपूजांकु
र्याद्विधानतः तत्रमूलशांतिवत्कलशस्थापनादिकृत्वातत्रशंभुपूजांविधाय तत्रआवाह्यवारुणैर्मंत्रैरनेनचविधानतः इमंमेवरुणेत्यनया
तत्वायामीत्यृचातथा त्वंनोअग्नइत्यनयासत्वंनइतिमंत्रतः आग्नेयंकुंभमारभ्यपूजांकुर्याद्यथाक्रमात् आनोभद्राश्चसूक्तेनभद्राग्नेश्च
सूक्तकं जप्त्वापुरुषसूक्तंचरुद्रंतुक्रमाज्जपेत् ईश्वरस्याभिषेकंचग्रहपूजांचकारयेत् समिदाज्यचरूंश्चैवतिलमाषांश्चसर्षपान् अश्वत्थ
प्लक्षपालाशसमिद्भिः खादिरैःशुभैः अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा अष्टाविंशतिभिर्वापिहोमंकुर्यात्पृथक्पृथक् त्र्यंबकेनमंत्रेण
तिलान्व्याहृतिभिःक्रमात् ग्रहाएवंचहोतव्याश्चास्मदुक्तविधानतः अन्यत्सर्वमाज्यावलोकनादिपूर्ववत् इतिकृष्णचतुर्दशीजननशांतिः
एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः प्रसूतिश्चतयोर्मृत्युर्भवेदेकस्यनिश्चयात् तत्रशांतिंप्रवक्ष्यामिसर्वाचार्यमतेनतु अग्नेरीशान

भागे तु नक्षत्रप्रतिमां ततः तन्नक्षत्रोक्तमंत्रेण चार्चयेत्कलशोपरि रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत् स्वस्वशाखोक्तमार्गेण कुर्यादग्निमुखं
ततः अनेनैव तु मंत्रेण हुनेदष्टोत्तरशतं प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तांतमेव च अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः वस्त्रालंकारगोदानै
राचार्यं पूजयेत्ततः ऋत्विग्भ्यो दक्षिणां दद्यान्माषत्रयसुवर्णकं देवताप्रतिमादानं धान्यवस्त्रादिभिः सह यानशय्यासनादींश्च दद्यात्तद्दोषशांतये भो
जयेद्ब्राह्मणान्सर्वान्वित्तशाठ्यविवर्जितः इत्येकनक्षत्रशांतिः अत्रैकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोरित्यत्र भ्राता च भ्राता च भ्रातरावितिभ्रा
तृपुत्रौ स्वसृदुहितृभ्यामिति एकशेषे सोदरयोर्भ्रातृभगिन्योरेव निषेधः स्यान्न तु पुंभ्रात्रोः एवं पितृपुत्रयोरित्यत्रापि पिता च पुत्रश्चेति द्वंद्वे पिता
पुत्रयोरेकनक्षत्रजनननिषेधः स्यान्न तु मातृपुत्रयोः न च माता च पिता च पितरौ मातापितृभ्यामित्येकशेषे तथा पुत्रश्च दुहिता च पुत्रौ पितरौ च पुत्रौ चेति
द्वंद्वे पितृपुत्राणामिति बहुवचनं स्यात् तथापि वचनांतरानुरोधात् इह विषयोपि संगृहीतो भविष्यति यदाह वसिष्ठः पित्रोस्तु जन्मनक्षत्रे जातस्तु
पितृमातृहा जन्मर्क्षे चैव तल्लग्ने जातः सद्यो मृतिप्रदः देवकीर्तिः यद्येकस्मिन्धिष्ण्ये जायंते दुहितरोथवा पुत्राः पित्रोरंतकराः सुर्यद्यपरे प्रीति
तुलास्यात् अपरे अन्यनक्षत्रे गर्गः यस्यैव जन्मनक्षत्रे जायेद्भ्राता सुतोपि वा सजातीयः सजात्या वा सोस्य प्राणान्प्रसाधयेदिति अथ मूलेउपा
लक्षणत्वेन सर्वशांतिशेषभूतो गोमुखप्रसवोभिधीयते गर्गः प्रणिपत्य रविं वक्ष्ये प्रायश्चित्तमनुस्मरन् सर्वारिष्टविनाशाय दुष्टं ज्योतिषार्णवेपि
त्वरिष्टे सुतारिष्टे मात्रारिष्टे तथैव च पौष्णाश्विन्यां गुरौ सार्पमघाचित्रेंद्रमूलभे एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा जन्मर्क्षे वाथ जन्मर्क्षे शुभवारे
शुभे दिने कृत्वाभ्यंगादिकं सर्वं गृहालंकारपूर्वकं गोमयेनोपलिप्याथ यथाविज्ञानुसारतः नवं शूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् स्थापयित्वाथ शि
शुं तत्र पुनः सूत्रेण वेष्टयेत् प्राङ्मुखं तमवाक्पादः तिलगर्भगतं शिशुं गोमुखं दर्शयित्वा तु पुनर्जातं तु गोमुखात् विष्णुर्योनीतिसूक्तेन गव्येन
स्नापयेच्छिशुं गवामंगेषु मंत्रेण गवामंगेषु संस्पर्शयेत् विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकं आचार्यस्तु समादाय पश्चान्मात्रे ददात्तदा माता
जघन्यभागस्था शिशुमानीय तं मुखात् ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् वक्त्रे संस्थाप्य तु पिता पुत्रस्य मुखमीक्षयेत् गोमूत्रं गोमयं क्षीरं दधिसर्पिः

कुशोदकं आपोहिष्ठादिभिर्मंत्रैरुपिषिंचेत्ततः शिशुं मूर्ध्निचाघ्रायतंपुत्रंतन्मंत्रैर्गणनदापिता अंगादंगात्संभवसिहृदयादधिजायसे आत्मावैपुत्र
नामासिसजीवशरदःशतं मूर्ध्निजिरवघ्रायतंशिशुंस्थापयेत्ततः पुण्याहंवाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः दरिद्रायाथविप्रायतांगांचाभ्यर्च्यदा
पयेत् गोवस्त्रस्वर्णधान्यादिदत्वादकोदितः क्रमात् यथाशक्तिधनंदद्याद्ब्राह्मणेभ्यस्तथापिता ततोहोमंप्रकुर्वीतस्वस्वशाखोक्तमार्गतः उल्ले
खनादिकंकृत्वाचाज्यभागांतमाचरेत् होमस्थानदिग्भागेधान्योपरिस्थितंघटं सपंचगव्यसंस्थाप्यतिलांस्तत्रविनिक्षिपेत् क्षीरद्रुमकषा
यांश्चपंचरत्नानिनिक्षिपेत् वस्त्रयुग्मेनसंछाद्यक्षीरादिभिरथार्चयेत् विष्णुंवरुणमभ्यर्च्यप्रतिमांचविधानतः आपोहिष्ठेतितिसृभिस्तु
मेसोमइत्यथ तद्विष्णोःपरमंपदमक्षीभ्यामितिसूक्ततः अग्निरेभिःमन्त्रैश्चअष्टाविंशतिसंख्यया अशक्तोचाष्टसंख्यंवादधिमध्वाज्यसं
युतं आदित्यादिग्रहाणांचहोमंकुर्यात् समंत्रकं इतिगोमुखप्रसवविधिः अथप्रसंगात्त्रीतरशांतिः सुतत्रयेसुताचेत्स्यात्तत्रयेवासुतोय
दि मातापित्रोःकुलस्यापितदारिष्टंमहद्भवेत् जातस्यैकादशेवापिद्वादशाहेशुभेदिने आचार्यमृत्विजान्वृत्वाग्रहयज्ञपुरःसरं ब्रह्मविष्णुम
हेशेंद्रप्रतिमाःस्वर्णतः कृताः पूजयेद्धान्यराशिस्थकलशोपरिशक्तितः पंचमेकलशेरुद्रंपूजयेद्रुद्रसंख्यया रुद्रसूक्तानिचत्वारिशांतिसू
क्तानिसर्वशः द्विजएकोजपेद्धोमकालेष्वथसमाहितः आचार्योजुहुयादत्रसमिदाज्यतिलांश्चरून् अष्टोत्तरसहस्रंवाशतंवाविंशतिंतुवा दे
वताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरं कांस्याज्यवीक्षणंकृत्वाशेषंपूर्ववदाचरेत् इतित्रीतरशांतिः अथसूर्यचंद्रग्रहणसमयजननशांतिः ग्रहणेचं
द्रसूर्यस्यप्रसूतिर्यदिजायते व्याधिपीडातदास्त्रीणामादौनुस्यात्तुदर्शनात् शांतिस्तेषांप्रवक्ष्यामिनराणांहितकाम्यया यस्मिन्नृक्षेविशेषेणग्रहणं
संप्रजायते तदृक्षाधिपतेरूपंसुवर्णेनप्रकल्पयेत् यथाशक्त्यनुसारेणविनशाठ्येनकारयेत् सूर्यग्रहेसूर्यरूपंसुवर्णेनस्वशक्तितः चांद्रंचंद्रग्र
हेधीमान् रजतेनविशेषतः राहुरूपंप्रकुर्वीतनागेनैवविचक्षणः नागेनसीसकेन शुचौदेशप्रयत्नेनगोमयेनप्रलेपयेत् तस्योपरिन्यसेद्दीमा
न् अनंवस्त्रसुशोभनं त्रयाणांचैवरूपाणांस्थापनंतत्रकारयेत् रक्ताक्षतंरक्तगंधंरक्तपुष्पांबराणिच सूर्यग्रहेप्रदातव्यंसूर्यप्रीतिकरंचयत्॥

श्वेतवस्त्रंश्वेतमाल्यंश्वेतगंधाक्षतादिभिः चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकरंचयत् राहवेचैवदातव्यंकृष्णपुष्पांबराणिच दद्यान्नक्षत्रनाथायश्वे
तंगंधानुलेपनंसूर्यंसंपूजयेद्धीमानाकृष्णेनेतिमंत्रतः चंद्रग्रहेचपालाशैः समिद्भिर्जुहुयान्नरः दूर्वाभिर्जुहुयाद्धीमान्राहोः संप्रीणनायच सयवाः
समिद्भिर्ब्रह्मवृक्षोत्थैः मेधायजुहुयाद्बुधः मेधायनक्षत्राधिपतये आज्येनचरुणाचैवतिलैश्चजुहुयात्ततः पंचगव्यैः पंचरत्नैः पंचत्वक्पंचप
ल्लवैः जलैरौषधिकल्कैश्चसहितैः कलशोदकैः औषधिकल्कैः सर्वौषधिकल्कैः अभिषेकंप्रकुर्वीतयजमानेप्रयत्नतः मंत्रैर्वारुणदैवत्यैरापो
हिष्ठादिभिः सह इमंमेगंगेपितरस्तत्त्वायामीतिमंत्रकैः अभिषेकेनिवृत्तेतुयजमानः समाहितः अनेनविधिनाशांतिंकृत्वासम्यग्विशेषतः अ
कालमृत्युंशोकंचव्याधिपीडांनचाप्नुयात् सौख्यंसौमनसंनित्यंसौभाग्यंलभतेनरः इत्थंग्रहणजातानांसर्वारिष्टविनाशनं कथितंभार्गवेनेदं शौ
नकायमहात्मने इतिशौनकोक्तग्रहणजननशांतिः अथज्वराद्युत्पत्तिकालीननक्षत्रशांतिः तत्रसाधारणोविधिः यस्मिन्नक्षत्रे ज्वरादि
पीडाभवतितन्नक्षत्राधिदेवताप्रतिमांसुवर्णेनकारयित्वाअमुकनक्षत्रसंभूतव्याधिशांत्यर्थंनक्षत्रशांतिंकरिष्ये इतिसंकल्प्य शुचिप्रदेशेगो
मयेनोपलिप्तेतंडुलैश्चतुरस्रंमंडलंनिर्मायतन्मध्येतत्तद्देवतावर्णवस्त्रद्वयवेष्टितंग्रथितंचंदनादिचर्चितंकलशंधान्यस्योपरिविन्यस्य तत्रसर्वौ
षधीः पंचरत्नानिपंचगव्यानिसप्तमृत्तिकाः पंचपल्लवान्स्वस्वमंत्रेणकलशेनिक्षिप्य सर्वेसमुद्राइतितत्रतीर्थान्यावाह्यतत्त्वायामीतिवरुणमा
वाह्यसंपूज्य स्वस्वगृह्योक्तविधिनाग्निंप्रतिष्ठाप्य आज्यभागांतेतत्तन्नक्षत्राधिदेवतामंत्रेणतत्तन्नक्षत्रपूर्वोत्तरनक्षत्रदेवतामंत्रेणतत्तद्द्रव्येण
चहोमंकृत्वातेनवरुणविकलशेनयजमानाभिषेकेविहितेततः प्रतिमांरोगीब्राह्मणायदद्यात् असौसाधारणोविधिः उक्तंच यस्मिन्नृक्षेभ
वेत्पीडातन्नक्षत्रस्यदेवतां सुवर्णनिर्मितांकृत्वापूजयेत्प्रयतः शुचिः गोमयेनानुलिप्तस्यमंडलंशुभलक्षणं चतुरस्रंचसंकीर्णंतंडुलैश्चकृतंना
कृतैः कृत्वातुस्थंडिलंतत्रयत्नतः कृष्णयामृदा तन्मध्येचसुधीः कुर्यात्तंडुलानांमहाव्रयं तत्रप्रमाणंखारीवाद्रोणोवादशशक्त्यपेक्षया अभा
वेपंचवाद्रोणाद्रोणंवातदभावतः ईशानकोणदेशेतुकलशंस्थापयेत्सुधीः निधायद्रविणंतत्रकलशंशक्त्यपेक्षया पीठंतुपूर्वतः स्थाप्यनन्यव

स्त्रेणसंयुतं स्वस्तिकं तंडुलानांच शुभानां तत्र संलिखेत् तन्मध्ये देवतास्तिस्रो नक्षत्रत्रितयस्य वै यस्मिन्नृक्षे भवेद्रोगस्तस्य पूर्वापरे सुधीः उडुनी पूज
येद्यत्नादधिप्रत्यधिदैवते देवतायस्यं नक्षत्रस्य मंत्रस्तल्लिंगएव च इत्थं चतस्य यत्प्रोक्तं प्रभावं प्रकृतं तथा तत्सर्वं विदुषानीय होमस्तत्र प्रकल्पयेत् पंचोप
चारसंयुक्तां पूजां तत्र प्रकल्पयेत् स्वगृह्योक्तविधानेन कुर्यादग्निमुखं सुधीः कलशं जलपूर्णं च वस्त्रयुग्मेन वेष्टितं निधाय चौषधीस्तत्र पंचपल्ल
वसंयुताः सप्तस्थानमृदा कुंभो आक्तवालं प्रकल्पयेत् इमं मे वरुण इत्येवं जलमंत्रेण वा पुनः सर्वे समुद्राः सरित इति मंत्रं च संस्मरेत् यच्चिद्धिते
विशो यथेत्यादि सूक्तं जपेत्पुनः आवाहयेद्घटे देवं वरुणं पयसां पतिं एवं नक्षत्रशांत्यर्थं विदध्यात्पूर्वपीठिकां सामान्यार्घ्यविधिः प्रोक्तो नक्षत्रा
णां प्रपूजने सर्वौषधीनां दुःप्राप्तौ भवेदेका शतावरी सर्वेषामपि गंधानां अभावे चंदनं मतं शतपत्रं सुमनसां धूपाभावे च गुग्गुलुः नैवेद्यानामभा
वे तु पायसं सघृतं स्मृतं मंत्राणामप्यभावे तु गायत्री मंत्र उत्तमः होमद्रव्यस्य दुःप्राप्तौ तिलाः प्रोक्ता मनीषिभिः अष्टोत्तरसहस्रं च तथा शतमुदाहृ
तमिति अथ नक्षत्रदेवताध्यानानि देवता अश्विनौ तत्र द्विभुजौ शुक्लवर्णकौ सुधाकलशसंयुक्तौ कमंडलुधरौ शुभौ १ यमस्तु देवता तत्र कृष्ण
वर्णो द्विबाहुकः तुलापवाहनः श्रीमान् पाशदंडधरः प्रभुः २ अग्निस्तु देवता तत्र रक्तवर्णोऽजवाहनः चतुर्भुजो धृतामंत्रस्रुवस्रुक् वरदाभयः
३ रक्तवर्णश्चतुर्बाहुर्हंसारूढश्चतुर्मुखः पद्माक्षसूत्रवरदाभयहस्तो निरामयः ४ सोमो हि देवता तस्य श्वेतवर्णः शुभाकृतिः दशाश्वरथमा
रूढः श्वेताश्वापि निगद्यते ५ रुद्रो हि देवता यस्य वृषारूढश्चतुर्भुजः त्रिशूलखड्गवरदाभयहस्तः प्रकीर्तितः ६ चतुर्भुजादितिः पीता साक्षसू
त्रकमंडलुः वरदाभयहस्ता सा कार्या स्वर्णमयी शुभा ७ चतुर्भुजः पीतवर्णो देवतास्य बृहस्पतिः दंडाक्षसूत्रपाणिस्तु साभयः सकमंडलुः ८
सर्पस्तु देवता तत्र महामंडलिरूपधृक् सुविस्तृतशिरश्चंडो मकपिंगललोचनः ९ पितरो देवता तत्र कृष्णवर्णाश्चतुर्भुजाः भद्राक्षसूत्राभयद
कमंडलुधराः शुभाः १० पूर्वाफाल्गुनिकायां च भगो देवः प्रकीर्तितः रक्तवर्णोम्बुजासीनो द्विभुजोभयपद्मकः ११ अर्यमा देवता पद्ममध्यस्थः प
द्मवर्णकः पद्माभयकरः श्रीमान्स्वर्णमूर्तिर्महाद्युतिः १२ सविता देवता तस्य सप्ताश्वरथवाहनः द्विभुजो रक्तवर्णः स्यात्पद्मासनसमाश्रयः १३

त्वष्टा पद्मस्थितिश्चित्रवर्णः स्यात्स चतुर्भुजः पद्मासनाक्षवलयः पद्मालः पद्मकरः प्रभुः १४ वायुश्च देवता तत्र मृगारूढश्च मोचकः अजाचर्मध
रः श्रीमान् द्विभुजः परिकीर्तितः १५ इन्द्राग्नी देवता तत्र गजाजावाहनौ यतौ चतुर्बाहू रक्तवर्णौ निजशस्त्रधरौ तथा १६ चापांकुशाभयैर्युक्तौ तथा
समविराजितौ १६ पद्मासनो रक्तवर्णो मित्रस्तस्यां तु देवता पद्माभयकरः श्रीमान् द्विभुजः परिकीर्तितः १७ शक्र ऐरावतारूढो दिव्यसिंहासने
विभुः श्वेतवर्णो वज्रधरोऽभयपाणिर्महाभुजः १८ निर्ऋतिर्देवता तत्र प्रेतारूढश्च मोचकः खड्गखेटकधारी च द्विभुजः परिकीर्तितः १९ जलं
तु देवता तस्य शुक्लवर्णः शुभाकृतिः वरुणोऽस्य जलस्यापि स्वामी पूज्यतमो मतः मकरे वाहने विष्टो भवेत्पद्मकरो ध्रुवं २० विश्वेदेवा देवताश्च श्वेतव
र्णाश्चतुर्भुजाः वरदाभयहस्ताश्च साक्षसूत्रांबुभाजनाः २१ विष्णुस्तु कृष्णवर्णः स्यात्पन्नगाशनवाहनः शंखचक्रगदापाणिः पीतवासाश्चतुर्भुजः
२२ वसवो देवतास्तत्र श्वेतवर्णाश्चतुर्भुजाः वरदाभयहस्ताश्च साक्षसूत्रांबुजासनाः २३ वरुणो देवता तत्र मकरोपरिसंस्थिता यष्टिपाशधरः
श्रीमान् महापद्मधरस्तथा २४ अजैकचरणो रुद्रो देवतास्य प्रकीर्तिता खड्गचर्मधरो वाग्मी भुजद्वयसमावृतः २५ अहिर्बुध्न्याभिधो रुद्रो देवता
स्य प्रकीर्तिता श्वेतश्चतुष्करः पद्मवरदाभयपाशभृत् २६ पूषा तु देवता तत्र पुष्पवर्णोऽम्बुजासनः द्विभुजः पद्मपाणिः स्यात्पयगर्भप्रियो विभुः २७
इति नक्षत्रदेवताध्यानं अथोपयुक्तत्वान्नारदीयोक्ता काकमैथुनदर्शनशांतिः दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनं स नरो मृत्युमाप्नो
ति ह्यथवा स्थाननाशनं काकघातव्रतं यद्वा विदधीताथ वत्सरं पितॄन्देवान्द्विजान्भक्त्या प्रत्यहं वाभिवादयेत् जितेन्द्रियो जितक्रोधः सत्यध
र्मपरायणः तद्दोषशमनार्थाय शांतिकर्म समारभेत् गृहस्यैशानदिग्भागे होमस्थानं प्रकल्पयेत् गृह्योक्तविधिना तत्र प्रतिष्ठाप्य हुताशनं प्र
ति मंत्रं त्र्यंबकेन अथ मृत्युंजयेन च व्याहृतीभिर्व्रीहितिलैः जपाद्यं तं प्रकल्पयेत् पूर्णाहुतिं च जुहुयात्कर्ता शुचिरलंकृतः स्वर्णशृंगीं रौप्यखु
रां कृत्वा धेनुं पयस्विनीं वस्त्रालंकारसंयुक्तां निष्कद्वादशसंयुतां तदर्धं तदर्धेन दद्याद्दक्षिणयायुतां यथावित्तानुसारेण न्यूनाधिकत्वक
ल्पना स्वाचार्याय श्रोत्रियाय तां गां दद्यात्कुटुंबिने यस्मात्त्वं पृथिवी सर्वा धेनो वै केशवसंनिभे सर्वमृत्युहरा नित्यमतः शांतिं प्रयच्छ मे ब्राह्मणे॥

ग्योविशिष्टेभ्योयथाशक्त्याचदक्षिणां ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकं एवंयःकुरुतेसम्यक्तस्माद्दोषात्प्रमुच्यते इतिकाकमैथुनदर्शन
शांतिः तत्रैवकपोतादिशांतिः आरोहयेद्गृहंयस्यकपोतोवाप्रवेशयेत् स्थानहानिर्भवेत्तस्यपद्मानर्थपरंपरा दोषायधनिनांगेहे दरिद्राणांशिवाय
च तस्यशांतिश्चकर्तव्याजपहोमविधानतः ब्राह्मणान्वरयेत्तत्रस्वस्तिवाचनपूर्वकं षोडशद्वादशाष्टौवाश्रौतस्मार्तक्रियापरान् देवाःकपोतइत्या
दिऋचाभिः पंचभिर्जपं लक्षकृत्वाप्ययत्नेनस्वगृह्योक्तविधानतः ईशान्यांस्थापयेद्वह्निंसुखातःप्रोत्तरंशतं प्रत्येकंसमिदाज्यान्नैःप्रतिप्रणवपूर्व
कं यतइंद्रभयामहेस्वस्तिदेतित्रियंबकैः त्रिभिर्मंत्रैश्चजुहुयात्तिलान्व्याहृतिभिस्ततः जपाहुतीस्ततोहुत्वाकुर्यात्पूर्णाहुतिंस्वयं विप्रेभ्योदक्षिणांदद्या
द्धेनुःशांतिंचततोजपेत् ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतबंधुभिः एवंयःकुरुतेसम्यक्तस्माद्दोषात्प्रमुच्यते पिंगलायास्तथैवंमधुवल्मीकयोरपि सं
पूर्णमंदिरेहानिः श्मशानेनिर्मलं प्राकारेचपुरद्वारेदेवागारेसवीथिषु ग्रामस्यतत्कुलंनैवपुरुकृत्स्नमयाततः शांतिकर्माखिलंकार्यंप्रागुक्तेनक्रमेण

त्रित्र्यंगपंचाग्निकुवेदवह्नयः शरेषुनेत्राश्विशरेंदुभूकृताः वेदाग्निरुद्राश्वियमाग्निवह्नयोब्धयः शतद्विद्विरदाभतारकाः ॥५९॥

तु इतिकपोतपिंगलामधुवल्मीकादिशांतिः अथपल्याःपतनेशरटस्यवावरोहणेफलंशांतिश्च पादयोर्जंघनेपाण्योर्गुदेगुह्येचजंघयोःपल्याः
पातेतथारोहेशरटस्यफलंनसत् अन्यत्रशुभदंपश्चात्सचैलंस्नानमाचरेत् दत्वाशिवालयेदीपंमुखमाज्येविलोकयेत् पल्लीशरटयोरूपंसुवर्णेनविनि
र्मितं तदर्धार्धप्रमाणेनवित्तशाठ्यविवर्जितः वस्त्रयुग्मेनसंवेष्ट्यश्रोत्रियायनिवेदयेत् इतिपल्लीशरटयोःशांतिः अथनक्षत्रप्रसंगादेवाश्विन्यादी
नांभानांताराःउपजातिकयाह त्रित्र्यंगेति तथाचश्रीपतिः वह्नित्रिऋत्विषुगुणेंदुकृताग्निभूतबाणाश्विनेत्रशरभूकुयुगाब्धिरामाः रुद्राब्धिराम
गुणवेदशतद्वियुग्मदंताबुधैर्निगदिताःक्रमशोभताराइति नक्षत्रसमतिवाक्येसप्तविंशतिभानिप्रतीयंते मूलेषष्टाविंशतिरितिविरोधेःउच्यते
उत्तराधेरुद्राब्धीत्यत्राद्यायश्चतस्त्रस्ताराः पूर्वाषाढोत्तराषाढयोर्ज्ञेयाः द्वेपूर्वाषाढायांइति नारदेनाप्युक्तत्वेवाभिधानात् तत्राश्विन्यादिस्ताराःए
वंभरण्यादीनांसाभिजितंताराःसंज्ञेया ताराणामोक्तिप्रयोजनमाहवराहः नक्षत्रजमुद्वाहफलमब्दैस्तारकामितैः सदसद्दिवसैर्ज्वरस्यनाशोव्याधेरन्यस्य

अथाश्विन्यादीनामाकृतिमुपजातिकयोद्दिशन्नामाह अश्व्यादिरूपमिति अश्विन्यादिनक्षत्राणांरूपमाकृतिरुच्यते तत्राश्विन्यास्तुरगास्यं अश्वमु
खसदृशंरूपं भरण्यायोनिर्भगसदृशं कृत्तिकायानापितक्षुरसदृशं रोहिण्याश्चनःशकटसदृशं मृगस्यएणास्यंहरिणमुखसदृशं आर्द्रायामणिस
दृशं पुनर्वसोर्गृहसदृशं पुष्यस्यशरत्कोबाणस्तत्सदृशं आश्लेषायाश्चक्राकारं मघायाभवनंगृहसदृशं पूर्वाफल्गुन्याः मंचःखट्वाकारं उत्तरा
फाल्गुन्याः शय्याकारं हस्तस्यहस्ताकारं चित्रायामौक्तिकाकारंस्वात्याविद्रुमंप्रवालसदृशं ५९ तोरणंबलिनिभमिति विशाखायास्तोरणाकारं अनू
राधायाबलिर्भक्तःपुंजाकारंज्येष्ठायाःकुंडलाकृतिः मूलस्यसिंहपुच्छाकारं पूर्वाषाढायागजदंतसदृशं उत्तराषाढायामंचकसदृशं अभिजितस्त्रिको
णकारःश्रवणस्यत्रिचरणसदृशं धनिष्ठायामर्दलसदृशं शततारायाःवृत्तंवर्तुलं पूर्वाभाद्रपदायामंचकसदृशं उत्तराभाद्रपदायायमलाभं रेवत्या

अश्व्यादिरूपंतुरगास्ययोनिःक्षुरोनएणास्यमणिर्गृहंच पृषत्कचक्रेभुवनंचमंचःशय्याकरोमौक्तिकविद्रुमंच ५९ तोरणंब
लिनिभंचकुंडलंसिंहपुच्छगजदंतमंचकाः त्र्यस्रित्रिचरणाभमर्दलोवृत्तमंचकयमाभमर्दलाः ६० जलाशयारामसुरप्र
तिष्ठासौम्यायनेजीवशशांकशुक्रे दृश्येमृदुक्षिप्रचरध्रुवेस्यान्नक्षेसितेस्वर्क्षतिथिक्षणेवा ६१ रिक्तारवर्जेदिवसेतिशस्ता
शशांकपापैस्त्रिभवांगसंस्थैः॥ ५,मर्दलमृदंगाकारंस्वरूपमित्यर्थः ६० अथजलाशयारामदेवप्रतिष्ठामुहूर्तंसामान्यतोलग्नशुद्धिंदैवत
विशेषेणलग्नशुद्धिर्नक्षत्रविशेषंचोपजातिकात्रयेणाहजलाशयेति रिक्तारेति शिवोन्त्ययुग्मेतिच जलाशयाःवापीकूपतडागादयः तेषांप्रतिष्ठाउत्स
र्गः आरामउपवनं तस्याप्युत्सर्गःसुरादेवाविघ्नादयः तेषांप्रतिष्ठापनं सौम्यायनेउत्तरायणे तथाजीवशशांकशुक्रेदृश्येउदितेसति तथामृदु
ध्रुवक्षिप्रचरनक्षत्रेषु तथासितेशुक्लपक्षेतथास्वर्क्षतिथिक्षणेवा ६१ तथारिक्तारवर्जेदिवसे रिक्तातिथिभौमवारव्यतिरिक्ततिथिवारेषुएवंविधेदिने
प्रतिष्ठाजलाशयारामदेवानांक्रमेणकर्माहत्वोपभोग्यत्वपूजायोग्यत्वरूपा अतिशस्तास्यात् तथाचगार्ग्यः देवतारामवाप्यादिप्रतिष्ठासूत्तरायणे माघा
दिपंचमासेषुशुक्लपक्षेप्यापंचमीदिनं दक्षिणेत्वयनेकुर्वन्नतत्फलमवाप्नुयात् यदातुदक्षिणायनएवजलस्थितिसंभवः तदानकालनियमः नकालनियमस्तत्र

तिभविष्यपुराणोक्तेः अथक्रूरप्रकृतीनांदक्षिणायनेपिस्थापनंकार्यमित्युक्तंवैखानससंहितायां मातृभैरववाराहनरसिंहत्रिविक्रमाः महिषासुरहंत्री चस्थाप्यावैदक्षिणायने नारदः विचैत्रेष्वेवमासेषुमाघादिषुचपंचसु यद्दिनंयस्यदेवस्यतद्दिनंतस्यसंस्थितं अथलग्नशुद्धिः शशांकपापैःचंद्रसूर्यभौमशनिराहुकेतुभिः त्रिभवांगसंस्थैः तृतीयषष्ठैकादशस्थानस्थितैरुपलक्षितेलग्नेतथासत्खचरैः शुक्रबुधगुरुभिः व्ययांत्याष्टगैः द्वादशाष्टमव्यतिरिक्ताखिलस्थानस्थैःसद्भिः देवादिप्रतिष्ठाऽस्तिशस्ता अथसूर्योमृगेंद्रेसिंहलग्नेस्थाप्यः तथाकोब्रह्माघटेकुंभेविष्णुर्युवतौकन्यायां ६२ शिवोमहादेवोनृयुग्मे मिथुनेचपुनर्देव्यादुर्गादयोद्वितनौद्विस्वभावराशौमिथुनकन्याधनुर्मीनलग्नेषुक्षुद्रादेव्यस्तुः षष्ठियोगिनीप्रभृतयःचरलग्नेमेषकर्कतुलामकरेषु सर्वइमेउक्तानुक्ताश्चस्थिरर्क्षेवृषसिंहवृश्चिककुंभेषुतथाः अथपुष्येग्रहाइति ग्रहाश्चंद्रादयोष्टौपुष्यनक्षत्रेस्थाप्याः उपलक्षणमेतत् सूर्यस्यहस्तनक्षत्रेस्थापनं इंद्रब्रह्मणोःपुष्यश्रवणाभिजित्सुकुबेरस्कंदयोरनुराधायां दुर्गादीनांमूले सप्तर्षीणांस्वाधिष्ठितनक्षत्रे लक्ष्मीव्यासवाल्मीक्यगस्त्यानांपुष्ये

व्ययांत्याष्टगैःसत्खचरैर्मृगेंद्रेसूर्योघटेकोयुवतौचविष्णुः ६२ शिवोनृयुग्मेद्वितनौचदेव्याःक्षुद्राश्चरेसर्वइमेस्थिरर्क्षे पुष्येग्रहाविघ्नपयक्षसर्पभूतादयोंत्येश्रवणेजिनश्च ६३॥ ॥इतिमुहूर्त्तचिंतामणौनक्षत्रप्रकरणंद्वितीयं २॥ ॥ ॥

स्थापनं तदुक्तंरत्नमालायां पुष्यश्रुत्यभिजित्सुचेश्वरकयोर्वित्ताधिपस्कंदयोर्मैत्रेतिग्मरुचेःकरेनिर्ऋतिभेदुर्गादिकानांशुभं सप्तर्षयोपत्रवसंनिधिष्ण्येकार्या प्रतिष्ठाखलुतन्नतेषां श्रीव्यासवाल्मिकिघटोद्भवानांतत्र्याष्मृतावाक्यतिभेग्रहाणामिति अथविघ्नपतिःविघ्नपोगणेशःयक्षोदेवयोनिः सर्पावासुक्यादयः भूतोदेवयोनिः विद्याधरोप्सरोयक्षरक्षोगंधर्वकिंनराःपिशाचोगुह्यकःसिद्धोभूतोमीदेवयोनयइत्यमरः आदिशब्देनराक्षसासुरप्रथमसरस्वतीप्रभृतयः अंत्येरेवत्यांस्थाप्याः तथाश्रवणेजिनोबौद्धश्चस्थाप्याः उपलक्षणंचैतत् इंद्रकुबेरवर्जितानांलोकपालानांधनिष्ठायांस्थापनं तथाचश्रीपतिः गणपरिवृढरक्षोयक्षभूतासुराणांप्रथमफणिसरस्वत्यादिकानांचपौष्णे श्रवसिसुगतनाम्नोवासवेलोकपानांनिगदितमखिलानांस्थापनंहिस्थिरेषु ६३॥ ॥इतिश्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्वकृतमुहूर्त्तचिंतामणिटीकायांप्रमिताक्षरायांनक्षत्रप्रकरणंसमाप्तं २॥ ॥ ॥

॥श्रीगणेशायनमः॥ अथसंक्रांतिप्रकरणंव्याख्यायते तत्रप्राग्राशितोपरराशौसंक्रमणंनामगमनंसंक्रांतिस्तस्याः नक्षत्रविशेषवशेनवारवशेनचसंज्ञां
फलंचसार्धवसंततिलकेनाह घोरार्केति विप्रांश्चेति अर्कसंक्रमणमर्कसंक्रांतिः उग्ररवौ उग्रनक्षत्रेषुरविवारेचेत्स्यात्तदा घोरेतिसंज्ञा साशूद्रा
न्सुखयेत्सुखमुत्पादयेत् उग्ररवाविति उग्रैः सहितोरविः उग्ररविः तस्मिन्नुग्ररवाविति मध्यमपदलोपितत्पुरुषः ततः सप्तम्येकवचनं अथवासम
हारद्वंद्वे अनित्यमागमशासनमितिनुमभावः एवंलघुविधावित्यादिष्वपिसमाधेयं अथलघुनक्षत्रेषुविधौसोमवारेसूर्यसंक्रांतिर्ध्वांक्षीनाम्नीवि
प्रान्वैश्यान्सुखयेत् चरर्क्षेभौमेचरनक्षत्रेभौमवारेवासूर्यसंक्रमणंचेन्महोदरयुतामहोदरीसंज्ञकाचौरान्सुखयेत् उमैत्रेबुधवारेमैत्रसंज्ञनक्ष
त्रेषुवाऽर्कसंक्रांतिर्मंदाकिनीनाम्नीनृपतीन्राज्ञः सुखयेत् स्थिरगुरौस्थिरनक्षत्रेषुगुरुवारेचार्कसंक्रांतिर्मंदानाम्नीविप्रान्ब्राह्मणान्सुखयेत् मिश्र

घोरार्कसंक्रमणमुग्ररवौहिशूद्रान्ध्वांक्षीविशोलघुविधौचचरर्क्षभौमे चौरान्महोदरयुतानृपतीन्मैत्रे मंदाकिनीस्थिरगुरौसुखयेच्चमं
दा १ विप्रांश्चमिश्रभभृगौतुपशूंश्चमिश्रातीक्ष्णार्कजेंत्यजसुखावलुराक्षसीच अंशोदिनस्यनृपतीन्प्रथमेनिहंतिमध्येद्विजानपिवि
शोपरकेचशूद्रान् २ अस्तेनिशाप्रहरकेषुपिशाचकादीन्नक्तंचरानपिनटान्पशुपालकांश्च ॥

मृगोमिश्रनक्षत्रयोः भृगुवारेवाऽर्कसं
क्रांतिर्मिश्रानाम्नीपशून्सुखयेत् तीक्ष्णार्कजेतीक्ष्णसंज्ञकनक्षत्रेषुअर्कजेशनिवारेवाराक्षसीनाम्नी अंत्यजसुखा अंत्यजान्चांडालान्सुखय
तीति अंत्यजसुखास्यात् १ अथदिनरात्रिविभागेनसंक्रांतेरशुभफलंउत्तरायणदक्षिणायनसंज्ञांचसार्धवसंततिलकयाह अंशइति अस्तेइति
अत्रार्कसंक्रमणमित्यनुवर्तते दिनमानेत्रिभिर्भक्तेत्र्यंशोभवति तत्रदिनस्यप्रथमेत्र्यंशेऽर्कसंक्रमणंनृपतीन्हंति मध्येद्वितीयत्र्यंशेद्विजान्ब्राह्मणा
न्हंति अपरकेतृतीयेत्र्यंशेवैश्यान्हंतीत्येवंसर्वत्रव्याख्येयं अस्तेसूर्यास्तसमयेऽर्कसंक्रमणंशूद्रान्हंति २ अथरात्रिसंक्रांतिफलं रात्रिप्रथमप्रहरे
पिशाचकान् आदिशब्देनभूतान् द्वितीयप्रहरेनक्तंचरान्राक्षसान् तृतीयप्रहरेनटान्नर्तकान् चतुर्थप्रहरेपशुपालकान् आभीरान् सूर्योदयस
मकालेऽर्कसंक्रमणंसकललिंगिजनंपाखंड्यादिकंहंतीत्यर्थः पाखंडाः सर्वलिंगिजनइत्यभिधानात् क्रूरसौम्यवारपरत्वेनफलमाहवसिष्ठः ॥

रविरविजभौमवारेसंक्रांतौ दिनकरस्य तन्मासोपित्तकफानिलजामयनरपतिकलहस्त्वदृष्टिश्च बुधगुरुसितचंद्राहे सतिसंक्रांतावनामयंनृणां क्षि
तिपतिनिकरसेमंसस्यविवृद्धिर्विधर्मिणांपीडा जन्मनक्षत्रेसंक्रांतिफलंदीपिकायां यस्यजन्मर्क्षमासाद्यरविसंक्रमणंभवेत् तन्मासाभ्यंतरेतस्यरोगबुद्धि
ग्धनस्याः तुगरसरोरुहपत्रेरजनीसिद्धार्थेलोध्रसंयुक्तैः स्नानंजन्मनक्षत्रेरविसंक्रांतौनृणांशुभदं अन्यच्चवसिष्ठः अजकन्याझषकर्किणिसंक्रां
तौयदिनचेद्बुधे आमयमरणंभूरतयुद्धमनर्घोल्बदृष्टिश्च वृषवृश्चिकतुलामकरे वृष्टिःस्यात्तत्क्रमविषये विस्फोटामयतस्करपीडावृष्टिः क्षया
तुभयं अथसौम्ययाम्यायनमिति मकरकर्कटयोः संक्रांतिश्चेत्तदाक्रमेणसौम्यायाम्यायनंनिरुक्तं मकरेउत्तरायणंकर्केयाम्यायनंस्यात् ३
अथावशिष्टसंक्रांतिषुषडशीत्यादिसंज्ञास्तुष्टुभाह। षडशीत्याननमिति धनुर्मिथुनकन्यामीनेषु अर्कसंक्रमणंषडशीत्याननंषडशीतिमुखंसं

सूर्योदयेसकललिंगिजनंचसौम्ययाम्यायनंमकरकर्कटयोर्निरुक्तं ३ षडशीत्याननंचापनृयुक्कन्याझषेभवेत् तु
लाजोविषुवंविष्णुपदंसिंहालिगोघटे ४ संक्रांतिकालादुभयत्रनाडिकाःपुण्यामताःषोडशषोडशोह्न्यगोः ॥

तंस्यात् तुलामेषयोःसंक्रांतिर्विषुवसंज्ञा वृषसिंहवृश्चिककुंभेष्वर्कसंक्रांतिर्विष्णुपदसंज्ञका ४ संक्रांतौगौणमुख्यकालमुपजात्याह
संक्रांतिकालादिति गणितमार्गेणायउक्तगोः सूर्यस्यसंक्रांतिकालस्त्वागतः ततउभयत्रः पूर्वतःपरतश्चषोडशषोडशनाड्योघटिकाःपुण्यसं
पादकत्वात्पुण्यामताः ब्रह्मसिद्धांते संक्रांतेःप्राक्परतश्चसार्द्धाःषोडशनाडिकाः त्रयस्त्रिंशत्तत्क्रमस्यपुण्याः सर्वस्यनाडिकाः अनेनसंक्रां
तेःपुण्यकालस्तुषोडशोभयतःकलाइति[illegible]तिवाक्यपूर्वतः परतश्चाष्टौअष्टौघटिकाइत्येवंषोडशेतिव्याख्यातन्तदपास्तंभवति सूर्यसि।
द्धांतेपि अर्कमानकलाःषष्ट्यागुणितामुक्तिभाजिताःतद्धनाड्यः संक्रांतेरर्वाक्पुण्यंतथापरेइति अथनिशीथतइति निशीथतोऽर्धरात्रा
त् अर्वाक्पूर्वंपरत्रपश्चाच्चसंक्रांतिकालेसति पूर्वापरार्द्धोत्तिमपूर्वभागयोः पूर्वापरयोरह्नोःक्रमेणान्तिमपूर्वभागयोरुभयत्रषोडशषोडशघ

अथलेपोविलेपनं मृगनाभिः कस्तूरी कुंकुमंकेशरं पाटीरंचंदनं मृत्प्रसिद्धा रोचनंगोरोचनमिति १४ १५ यावोऽलक्तकः श्रातुर्मदोमार्जारध र्मः भाषयाजवादिरिति निशाहरिद्रा अंजनंकज्जलं कालागरुरगरुविशेषः चंद्रकः कर्पूरः अथजातिः संकरभवाअनुलोमजाः प्रतिलोमजाश्च अथपुष्पं पुंनागकंनागकेशरपुष्पं मल्लिकावेलिः जपाओदुपुष्पंजास्सवनं शेषाणिप्रसिद्धानिसर्वत्र क्वचिद्वयोप्युक्तं शिशुःकुमारस्त्वगता लकायुवाप्रौढाप्रगल्भाचततस्त्ववृद्धा वंध्यातिवंध्याचसुतार्थिनीचप्रव्राजिकाचेतिववादिकानामिति तथाकेचित् भोजनपात्रमप्युक्तं सुवर्णरौ

वस्त्रंश्वेतसुपीतहारितकपांडुरक्तंकालासितंचित्रंकंबलदिग्घनाभमथशस्त्रंस्याद्भुसुंडीगदा १४ खड्गोदंडशरासितोमरम योकुंतश्चपाशांकुशास्त्रंबाणस्त्वथभक्ष्यमन्नपरमान्नंभैक्ष्यपक्वान्नकं दुग्धंदध्यपिचित्रितान्नगुडमध्वाज्यंतथाशर्करायो लेपोमृगनाभिकुंकुममथोपाटीरमृद्रोचनं १५ यावश्चातुमदोनिशांजनमथोकालागरुश्चंद्रकोजातिर्दैवतभूतसर्पविहगाः पश्वेणविप्रास्ततः क्षत्रावैश्यकशूद्रसंकरभवाः पुष्पंचपुंनागकंजात्नीबाकुलकेतकानिचतथाबिल्वार्कदूर्वांबुजं १६ स्यान्मल्लिकापाटलिकाजयाचसंक्रांतिवस्त्राशनवाहनादेः नाशश्चतद्वत्युपजीविनांचस्थितोपविष्टः स्वपतांचनाशः १७ संक्रांतिधिष्ण्याधरधिष्ण्यतस्त्रिभेस्वभेनिरुक्तंगमनंततोगभे॥ ॥ एतान्माणिलोहसीसंत्रपुस्तथा कांस्यपाषाणकाष्ठंचमृत्यान्नंवेणु

पात्रकानि एवसंक्रमकालयानिवस्त्राशनवाहनादीन्यभिहितानि आदिशब्देनायुधलेपनजातिपुष्पाणितेषांनाशोभवेत् चपुनस्तद्वत्युप जीविनांवस्त्रादिवृत्त्युपजीविनांनाशोभवेत् स्थितोपविष्टः स्वपतांचस्यातेतिलिङ्गत्यादिनासुप्तत्वादीन्युक्तानितद्गुणविशिष्टानांनाशः स्यादित्य र्थः १६ १७ अथसंक्रांतिवशेनप्रतिमनुष्यंशुभमुपजात्याह संक्रांतीति संक्रांतिर्यस्मिन्नक्षत्रेस्यात्ततोऽधराधिष्ण्यंपूर्वनक्षत्रंतस्मात्स्वजन्म नक्षत्रंगण्यं तच्चेत्प्रथमत्रिभेभवतितदागमनंयात्रास्यात् ततःप्रथमत्रिकानंतरं अंगभेषण्णक्षत्रेषुयदिस्वभेतदासुखंस्यात् ततस्त्रिभे॥ ॥

एवंसमेविंशतिः भौमेष्टौ तेह्वादश गुरोधन्योष्टादश शुक्रेष्टादश शनौपंचेत्यर्थः १२ अथकीदृशस्यरवेः संक्रमोजातस्तुफलमिंद्रवज्रयाह स्या
नैतिसइति रविस्तैतिलेकरणेनागकरणेचतुष्पदेचकरणेसुप्तः संक्रमितःस्यात् गरादिपंचगरेवणिजेभद्रायांबवेबालवेचनिविष्टः संक्रमितःस्या
त किंसुघ्नेसकौलवेशकुनौचऊर्ध्वैः ऊर्ध्वस्थितः संक्रमितःस्यात् इहकरणाधिकरणकसंक्रांतौरविः अर्घवर्षणे अर्धमूल्येवर्षणेदृष्टेउप
लक्षणत्वादन्नेपिक्रमादनिष्टः समः श्रेष्ठः स्यात् अयमर्थः सुप्तरविसंक्रमात् अर्घवर्षणधान्येष्वनिष्टः महार्घदृष्ट्याभावधान्याभावकारकाः ए
वंविनिविष्टः तयोर्ध्वैः श्रेष्ठः उक्तंचश्रीपतिना धान्यार्घवृष्टिषुभवेत्क्रमशस्त्वनिष्टमध्येष्टतेति १३ अथरविसंक्रांतेः करणपरत्वेनवाहन
वस्त्रायुधभक्ष्यलेपनजातिपुष्पाणिसफलानिशार्दूलविक्रीडितमयेणोपजातिकयाचाह सिंहेति खड्गेति यावश्वेति स्यान्मल्लिकेति बवतोबव
दिशोनखागजाः सूर्याधन्योष्टादशसायकाः १२ स्यात्तैतिलेनागचतुष्पदेरविः सुप्तोनिविष्टस्तुगरादिपंचके किंसुघ्न
ऊर्ध्वैः शकुनौसकौलवेऽनिष्टः समः श्रेष्ठइहार्घवर्षणे १३ सिंहव्याघ्रवराहरासभगजावाहद्विषद्घोटकाः श्वाजोगौ
श्वरणायुधश्चबवतोवाहारवेः संक्रमे॥ ११ मारभ्यैकादशकरणेष्वुक्तक्रमेणवाहनादीनिसुः वाहनानिसिंहादीनि रासभोगर्दभः वाह
द्विषन्महिषः लुलायोमहिषोवाहद्विषंत्कासरसैरभाइत्यमरः अजोमेषः चरणायुधः कुक्कुटः नारदेनतुविशेषउक्तः खगवाल्हीकवंगेषुसं
क्रांतेधिष्ण्यवाहनं अन्यदेशेषुतिथ्यर्धवाहनाः सुबवादयइति अश्विन्यायदासंक्रांतिस्तदाश्विन्याः योअश्वस्तद्वाहनंस्यात् खगादिदेशेषु
एवंसर्वनक्षत्रेषु अथवस्त्रंश्वेतादि हरितकंनीलवर्णं पांडुअरुणवर्णं आरक्तमलक्तकवर्णं कालंश्यामं असितंश्वेतवर्णरहितंगर्दभेभवं
णमित्यर्थः दिग्वस्त्राभावः घनाभंमेघवर्णं अथशस्त्रं मुशुंड्यादीनिआयुधानिप्रसिद्धानि अथमत्स्यं अन्नंभक्ष्यः परमान्नंपायसं भैस्यं
भिक्षासमूहपक्वान्नमपूपादि चित्रितान्नंहरिद्रादिरंजितं॥ ॥ ॥

ईश्वरेछालोकादृष्टवशात्तत्तद्राश्यादिभागस्थसूर्यतेजःसंपर्कश्चलसंक्रमः मंडलसंक्रमश्चराशिसंक्रमइतिविषयविवेकः तत्रनिरयनगणनयै
वसकलव्यवहारःसाध्यः सायनगणनातुनियतविषयैव अयनांशैः प्रदातव्यालग्नेक्रांतौचरागमे विनिमेसन्निभेपातेतथाह कर्मपातयोरि
ति एवंद्वयोरपिमानयोरसंक्रांतौव्यवहारइतिसर्वमनाकुलं पुण्यकालस्तूभयविधसंक्रमेपिज्ञेयः पूर्वलिखितवाक्यस्वरसात् ९ अथसं
क्रांत्युपयोगाज्जघन्यबृहत्समनक्षत्राण्युपजात्याह सममिति मृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वाख्यपभंसमं अत्यपभंमूलः एतानिपंचदशभा
निसमसंज्ञानिज्ञेयानि ध्रुवद्विदैवादितिभंबृहत्स्यात् ध्रुवादिषट्भानिबृहत्संज्ञकानि सार्पांबुपाद्रानिलशाक्रयाम्यंजघन्यंस्यात् आश्लेषादिष
ड्भानिजघन्यसंज्ञानि ९ अथसंज्ञाप्रयोजनमुपेंद्रवज्रयाह जघन्यभेइति जघन्यनक्षत्रेऽर्कसंक्रमणेपंचदशमुहूर्ताज्ञेयाः बृहन्नक्षत्रेऽ

मेषादितःप्राक्चलसंक्रमाःस्युर्दानेजपादौबहुपुण्यदास्ते ९ समंमृदुक्षिप्रवसुश्रवोग्निमघात्रिपूर्वाख्यपभंबृहत्स्यात्
ध्रुवद्विदैवादितिभंजघन्यंसार्पांबुपाद्रानिलशाक्रयाम्यं १० जघन्यभेसंक्रमणेमुहूर्ताःशरेंद्रवो.१५ बाणकृता ४५ बृहत्सु
खरामं ३० सख्यासमभेमहर्घसमर्घसाम्यंविधुदर्शनेपि ११ अर्कादिवारेसंक्रांतौकर्कस्याब्दविशोपकाः॥ ६ ॥

र्कसंक्रमणेबाणकृताःपंचचत्वारिंशन्मुहूर्ताज्ञेयाः समनक्षत्रेऽर्कसंक्रमणेखरामसंख्यास्त्रिंशन्मुहूर्ताज्ञेयाः उक्तंचनारदेनतासांप्रमाणंघ
टिकास्त्रिंशन्नवतिषष्टयइति फलमाह महर्घसमर्घसाम्यमिति पंचदशमुहूर्तायांसंक्रांतौसर्वमन्नंमहर्घंदुष्प्रापंभवति पंचचत्वारिंशन्मु
हूर्तासंक्रांतौसमर्घंत्रिंशन्मुहूर्तायांसंक्रांतौसमंयथास्थितंभवति विधुदर्शनेपीति चंद्रदर्शनेप्येवमेवफलंवाच्यं अयमर्थः जघन्यभेचंद्रदर्श
नेमहर्घं बृहन्नक्षत्रेचंद्रदर्शनेसमर्घं समभेचंद्रदर्शनेसाम्यं ११ अथप्रसंगात्कर्कसंक्रांतौमेघविशोपकाननुष्टुभाह अर्कादीति कर्कसंक्रां
तौअर्कादिवारेसति एतेअब्दविशोपकाज्ञेयाः यथा रविवारेकर्कसंक्रांतौदशविशोपकाः॥

१४४४ ६०
वेदा[illegible] खरसहृतः शकोऽयनांशाः भवन्ति

तिषुसौम्यायनेमकरसंक्रांतौचसंक्रांतिकालात्परतः त्रिंशत्षोडशघटिकाअतिपुण्याः प्रथमास्तुनतथा एवंनिर्णीतेतत्पुण्यकालेस्नानाद्यवश्यंविधेयं
तत्रस्नानाद्यकुर्वतप्रत्यवायमाहवसिष्ठः विषुवत्ययनेग्रहणसंक्रांतौपुण्यदिवसेवा पितृतर्पणंनकरोतिहिदत्वाशापंव्रजतितस्यपिता षड्
शीत्यामयनद्वयानंविषुवद्द्वये दृश्यतेसागरस्यांततस्नानान्नैवदृश्यतइतिभरद्वाजोक्तेः अयंचनिर्णयश्चंद्रादीनामपिसंक्रमेज्ञेयः तत्रहे
माद्र्यादौकालनिर्णयकारादिभिः याःपुण्यकालघटिकाउपनिबद्धास्ताः स्थूलाः तेनषष्टिघ्नबिंबग्रहभुक्तिभक्तमित्यादिप्रकारेणग्रहमध्य
भुक्तिमध्यबिंबैरानीताः सूक्ष्माघटिकालिख्यंते स्फुटमतिस्फुटबिंबैश्चैताःसाध्यंतेताअतिसूक्ष्मास्तासामनिपतनत्वात् श्लोकेअनुपतिवधः मध्य
मानुयथा नाड्याःप्रमगुणा ३३ रवेरथविधोः षट्दोःपलैर्युक्तद्वयं २।२६ भौमस्याब्धिपलैर्युतानव ९।१४ विदोयुक्ताःपलैःखाश्विभिः षट्नाड्यो
६।२० भृगजा ८८ गुरोरथभृगोर्नंदाःपलैरष्टभिः ९।८ पुण्याःस्युःखनृपाः १६० शनेरुभयतोराहुक्षयोः संक्रमेरिति ८ निरयनांशसंक्रांति

षडशीत्याननेसौम्ये परानाड्योतिपुण्यदाः ८ तथायनांशाः खरसाहताश्चस्पष्टार्कगत्याविहृतादिनाद्यैः ॥ ॥

मभिधायेदानींसायनांशसंक्रांतिसपुण्यकालमुपजात्याह तथेति यथाराशिसंक्रमाबहुपुण्यदास्तथाचलसंक्रमाअपीतिव्यवहितस्तथाशब्दः
अयनांशाः षष्ट्यागुण्याः स्पष्टसूर्यगत्याविहृतालब्धैर्दिनाद्यैर्दिनंघटीपलैः कृत्वामेषादिद्वादशसंक्रमाः स्युस्तेचलसंक्रमादानेजपादौजप
श्राद्धहोमादौबहुपुण्यदाभवंति पुलस्त्यः अयनांशसंस्कृतोभानुर्गोलेचरतिसर्वदा अमुष्याराशिसंक्रांतिस्तुल्यःकालविधिस्तयोः स्नानदान
जपश्राद्धव्रतहोमादिकर्मभिः सुकृतंचलसंक्रांतावक्षयंपुरुषोऽश्नुतइति जाबालिरपि संक्रांतिषुयथाकालस्तदीयेप्ययनेतथा अयनेविंश
तिः पूर्वामकरेविंशतिःपरेति अत्रमकरायणपूर्वाविंशतिर्घटिकाः पुण्याः मकरसंक्रांतौतुपराविंशतिर्घटिकाः पुण्यकालः मकरव्यति
रिक्तैकादशसंक्रांतिषुतत्तत्संक्रमवत् पुण्यकालोज्ञेयः अयनांशानयनादिविचारः सिद्धांतादवगंतव्याः॥ ॥ ॥

मु॰टी॰
सं॰प्र॰
३८

संमिता तथैवार्धोदयात्प्राग्यदि कान्तयसंमितेति एवं सत्यर्कबिंबस्यार्धास्तादर्धोदयाद्वा क्रमात्पश्चात्प्राक् त्रिघटिमिता अस्तसंध्योदयसंध्या चो
च्यते तत्रास्तसंध्यायां यदि मकरसंक्रमः स्यात्तदा दिन एव पुण्यकालो नोत्तरदिने यद्यस्तसंध्यामतिक्रम्य मकरसंक्रांतिस्तदोत्तरदिन एव पुण्य
कालो न पूर्वदिने एवं यद्युदयसंध्यायां कर्कसंक्रांतिस्तदा सूर्योदयानंतरमेव पुण्यकालो न प्राग्दिने यद्युदयसंध्यातः प्राक् कर्कसंक्रमस्तदा प्रा
ग्दिन एव पुण्यकालो नोत्तरदिने इति निष्कृष्टोऽर्थः अथ रात्रौ स्नानं न कुर्वीत दानं चैव विशेषत इति रात्रौ स्नानदानादिनिषेधेपि नैमित्तिकं
तु कुर्वीत स्नानं दानं च रात्रिष्विति सुमंतुवाक्यशेषात् सुतजनने संक्रांतावुपरागे सूर्यचंद्रयोर्नित्यं रात्रावपि कर्तव्यं स्नानं दानं विशेषतो नृ
णामिति वसिष्ठवचनात् ग्रहदर्शनसंक्रांतिविवाहात्ययवृद्धिषु स्नानदानादिकं कार्यं निशि काम्यव्रतेषु चेति रात्रौ संक्रमणे रात्रौ स्नानं प्राप्तं तत्र
कर्कमकरसंक्रांतौ स्नानदानादौ देशप्रसिद्धशिष्टाचारेण व्यवस्थावगंतव्या तत्र गौर्जरास्तु ग्रहणवदयनद्वय इति स्वीयसूत्रे स्नानं दानं ग्रहणवत्सौ

चेद्याम्यस्तो मेषमयनेक्रमात्ततः पुण्योत्तरदानीपरपूर्वघस्रौ ७ याम्यायने विष्णुपदे चाद्या मध्यास्तुलाजयोः ॥ ९ ॥

म्ययाम्यायनद्वये इति कश्यपसंहितोक्तं चातुसज्य रात्रावयनसंभवे सति रात्रावेव स्नानादिकं कुर्वंति दाक्षिणात्यास्तु कार्मुकं तु परित्यज्य झषं
याति दिवाकरः इत्यादि भविष्योत्तरादिवाक्यमंगीकृत्य दिवस एव स्नानादिकं कुर्वंति तत्रापि नारदोक्तसंध्याकालसंक्रमे विशेषो ध्येय इत्यलं
७ अथ स्वपरतः षोडशघटिकाः पुण्या इति पूर्वं सामान्येनोक्तमिदानीं विष्णुपदादि विशेषमनुष्टुभाह याम्यायन इति कर्कसंक्रांतौ विष्णु
पदे सिंहवृश्चिककुंभसंक्रांतिषु संक्रांतिकालादाद्याः प्रथमाः षोडशघटिकाः अतिपुण्यदाः स्नानदानादौ अनंतपुण्यदास्ते याः अग्रि
मास्तु तथा तुलाजयोः तुलामेषयोः मध्याः उभयतः षोडशघटिकाः संक्रांतिकालात्प्रागष्टौ परतश्चाष्टाविति दीपिकाकारैर्व्याख्यातं
यदुक्तं गुरुणा वर्तमाने तुलामेषे नाड्यस्तूभयतो दशेति मध्यमात् तृतीयांशाभिप्रायेणेति ज्ञेयं तथा षडशीत्यानने मिथुनकन्याधनुर्मीनसंक्रां

राम॰
३८

टिका: पुण्या इति पूर्वेण संबंधः अयमर्थः यद्यर्धरात्रात् प्राक् संक्रांतिस्तदा पूर्वदिनस्य उत्तरार्धं पुण्यं यद्यर्धरात्रादुपरि संक्रांतिस्तदोत्तरदिनस्य पू
र्वार्द्धमेव पुण्यमित्यर्थः ५ अथार्धरात्रसंक्रमणे मकरकर्कटयोश्च विशेषमुपजातिकयाह पूर्ण इति पूर्णे निशीथे अर्धरात्रे यदि संक्रमः स्यात्तदा
दिनद्वयं पूर्वदिनं परदिनं च पुण्यमुक्तं उक्तं च यद्यर्द्धरात्र एव स्यात्तु पूर्णे संक्रमे रवेः तदा दिनद्वयं पुण्यं स्नानदानादिकर्मसु अथेति अथानंतर
मुदयास्तात् सूर्योदयात्सूर्यास्ताच्च पूर्वपरत्वाच्च यदि याम्यसौम्यायने कर्कमकरसंक्रांती भवतः तदा पूर्वदिने पुण्ये स्यातां अयमर्थः सूर्योद
यात् पूर्वं [illegible] संक्रमणं स्यात्तदा पूर्वदिन एव पुण्यकालो नोत्तरदिने तथा यदि सूर्यास्तानंतरं मकरसंक्रांतिः स्यात्तदोत्तरदिन एव पुण्यकालो न
पूर्वदिने गार्ग्यः यदास्तमानवेलायां मकरं याति भास्करः प्रदोषे चार्द्धरात्रे वा स्नानदानं परेऽहनि अर्धरात्रे तदूर्ध्वं वा संक्रांतौ दक्षिणायने पूर्वमेव दि

निशीथतोर्वागपरत्र संक्रमे पूर्वापराहांतिमपूर्वभागयोः ५ पूर्णे निशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदया
स्तात् पूर्वपरत्वाद्यदि याम्यसौम्यायने दिने पूर्वपरे तु पुण्ये ६ संध्या त्रिनाडीप्रमितार्कबिंबादर्धोदितास्तादध ऊर्ध्व
मत्र ॥

नं प्राह्णं यावन्नोदयते रविरिति वाड्वार्थे प्रदोषलक्षणं स्कांदे त्रिमुहूर्तः प्रदोषः स्याद्रवावस्तंगते सतीति ६ अथोदयास्तादि
तिवचनस्यापवादमिंद्रवज्रयाह संध्यादिति अर्कमंडलादर्धोदितादर्धास्ताच्चाधऊर्ध्वं क्रमात्त्रिभिर्नाडीभिर्मिता संध्या संध्याकालः स्यात् अ
र्धोदितार्कबिंबात् पूर्वं त्रिनाडीमिता प्रातः संध्या तथार्धास्तार्कबिंबादुपरि त्रिनाडीमिता सायंसंध्येत्यर्थः तत्प्रयोजनमाह अत्रेति अत्र प्रा
तः संध्यायां सायंसंध्यायां च क्रमात् याम्यसौम्ये अयने स्तः तदानीं परपूर्वदिवसौ पुण्यौ यदि प्रातः संध्यायां दक्षिणायनप्रवृत्तिः तदा सूर्योदया
नंतरं संपूर्णमहः पुण्यं तथा यदि सायंसंध्यायां उत्तरायणप्रवृत्तिस्तदा सूर्यास्तात्पूर्वं संपूर्णमहः पुण्यं स्यादित्यर्थः तदाह नारदः सूर्योस्तमनसं
ध्यायां यदि सौम्यायनं भवेत् तदा स्यादहः पुण्यं पूर्वाह्णः पूर्वतो यदीति उदयसंध्यास्तसंध्ययोर्लक्षणं तत्रैव अर्धोदास्तमनात्संध्याघटिकात्रय

पीडनं शरीरपीडा पुनरंगभेऽशुकंवस्त्रादिप्राप्तिः ततः त्रिभेस्त्रभेऽर्थहानिः ततोरसभेस्त्रभेधनागमोधनप्राप्तिः स्यादित्यर्थः अशुभफलदा
यांसंक्रांतिदानमाहनारदः तिलोपरिलिखेच्चक्रंत्रित्रिशूलंत्रिकोणकं तत्रहेमविनिक्षिप्यदद्याद्दोषापनुत्तयेइति १८ अथकार्यविशेषग्रहविशे
षबलंसामान्यतोग्रहबलंचोपजात्याह नृपेक्षणमिति रवेरितिल्यब्लोपेपंचमी सूर्यबलेसति एतानिकार्याणिकार्याणि यथारवेः अर्केबलेवा
रेवानृपेक्षणंराजदर्शनंविधेयं एवंचंद्रादावपिव्याख्येयं चंद्रेसर्वकृतिःसर्वकृत्यानि भौमेसंगरोयुद्धं बुधेशास्त्रमध्ययनंअध्यापनंवागुरौविवाहः
शुक्रेगमनं शनौदीक्षणाभ्यागमादिदीक्षाविधेयेत्यर्थः अथेति ताराबलतोविधुःशुभोज्ञेयः यदाचंद्रसंक्रमणंस्यात्तदाताराबलंचेत्तदासपाददि
नद्वयंचंद्रोऽशुभोपिशुभः तारादौष्ट्येशुभोप्यशुभः एवंविधोर्बलाद्रविःसंक्रमणेऽशुभोपिमासपर्यंतंशुभः शुभस्तुसुतरांसमीचीनएव चंद्र-

सुखंत्रिभेपीडनमंगभेंऽशुकं त्रिभेऽर्थहानीरसभेधनागमः १८ नृपेक्षणंसर्वकृतिश्चसंगरः शास्त्रंविवाहोगमदीक्षणेर
वेः वीर्येयतताराबलतःशुभोविधुर्विधोर्बलेऽर्केऽर्कबलेकुजादयः १९ स्पष्टार्कसंक्रांतिविहीनउक्तोमासोधिमासःक्ष

दौष्ट्येशुभोपि अशुभइत्यर्थः परेभौमादयःसंक्रांतिचिकीर्षवस्तत्तद्बलतः सूर्यबलादशुभाअपिशुभाज्ञेयाः रवि ऽऽयमासकस्तु ॥
दौष्ट्येतुशुभाअप्यशुभाः १९ अथाधिमासक्षयमासयोर्लक्षणमुपजात्याह स्पष्टार्केति शुक्लप्रतिपदिदर्शांतश्चांद्रोमासः सचेत्स्पष्टसूर्यसं
क्रांत्याविहीनोरहितोभवेत्तदाधिमासउक्तः चांद्रोमासोह्यसंक्रांतोमलमासःप्रकीर्तितइति ब्रह्मसिद्धांतोक्तेः तुविशेषेकदाचित्तचांद्रोमासोद्वि
संक्रमः द्वौसंक्रमौयस्मिन्सोद्विसंक्रमः स्पष्टसूर्यसंक्रांतिद्वययुतस्तदाक्षयमाससंज्ञकउक्तः आद्यंतदर्शयोर्मध्येभानोरेवतयोर्यदासंक्रांतिद्वि
तयंचेत्स्यात्क्षयमासःसउच्यते इतिवसिष्ठोक्तेः तत्रक्षयमासेजातानांवधोपनेमृतानांश्राद्धेचतिथेर्विभागयोः पूर्वोत्तरदलयोः संबंधेनप्रथ
मांतसंज्ञौमासौस्तःस्यातां तिथिपूर्वार्धेजातानांमृतानांचपूर्वमासेवधोपनंश्राद्धंचविधेयं तिथ्युत्तरार्धेजातानांमृतानांचोत्तरमासे ॥

वृधोपनंश्राद्धंचविधेयं तिथ्यर्धेप्रथमेपूर्वोऽपरस्मिन्नपरस्तथा मासावितिबुधैश्चिंत्यौक्षयमासस्यमध्यगौइति मासादिलक्षणभेदविचारस्तु
ग्रंथविस्तरभयान्नलिखितः २०॥ ॥इतिश्रीदैवज्ञानंतसुतदैवज्ञरामविरचितायांस्वकृतमुहूर्त्तचिंतामणिटीकायांप्रमिताक्षराख्यायांसंक्रांतिप्रकरणं
समाप्तंतृतीयं ३॥ अथग्रंथांतरेसंग्रहः योगिनीस्थितकोष्ठातः संक्रांतेरागमोमतः चंद्रस्थदिशिदृष्टिः स्यात् गमनंवारदिक्स्मृतं इतिकचित्
रवौसंक्रमणेपूर्वेमुखंजीवेतुउत्तरे प्रत्यङ्मुखंशनौसोमेशेषेदक्षिणतोमुखंइति बवेपूर्वेमुखंप्रोक्तंबालवेयमदिङ्मुखं कौलवेपश्चिममुखंतै
तिलेचोत्तरेमुखं गरेवायव्यदिग्वक्त्रंवणिज्याग्नेयदिङ्मुखं भद्रायामीशदिग्वक्त्रंशकुनेनैर्ऋतोमुखं चतुष्पदिचपाताले नागेचोर्ध्वमुखीभवेत् किं
स्तुघ्नेसर्वदिग्वक्त्रंसंक्रांतिमुखलक्षणं अथदृष्टिःचंद्रेगुरौदृष्टिविदिक्कृशानौसूर्येसितेनैर्ऋतिकोणगादृक् धात्रीसुतेदृक्पवनेनिरुक्ताबुधेशनौरुद्र

द्विसंक्रमात्तत्रविभागयोस्तुः तिथेर्हिमासोप्रथमांत्यसंज्ञौ २० इतिश्रीमुहूर्त्तचिंतामणौसंक्रां
तिप्रकरणंतृतीयं ३ सूर्योरसांत्यखयुगेग्निनंदेशिवाक्षयोर्भौमशनीतमश्च॥ १ ॥

दिशीक्षणंभवेत् अथगमनंमंदेचंद्रेगमः सौम्यबुधेभौमेचवारुणे रवौशुक्रेगमोयाम्येगुरौप्राग्गमनंस्मृतमिति अथगोचरप्रकरणंव्याख्यायते त
त्रजन्मराशेः सकाशाद्ग्रहाणांचारवशेनयच्छुभाशुभफलंतद्गोचरफलमित्युच्यते तत्ररविचंद्रयोर्गोचरफलमुपजातिकयाह सूर्यइति रसांत्येइ
त्यादौसमाहारद्वंद्वः शिवाक्षयोरित्यादावितरेतरयोगः अंबराध्वाविल्लामागमशासनमितिनुमभावोध्येयः एवंसर्वत्र लग्नजन्मराशेरितिपंचमश्लो
कस्त्वमत्राध्याहार्यः ततः सूर्यः क्रमात्रसांत्येशुभोविद्धश्चस्यात् सूर्योजन्मराशेः सकाशात्षष्ठस्थानेशुभः यदितत्रएवजन्मराशेर्द्वादशस्थान।
स्थाश्च्यन्यग्रहास्तदाविद्धः सूर्यःशुभोप्यशुभफलदाता अत्रशनेः सूर्यपुत्रत्वात्तद्वेधोनांगीकृतः यतःपितुर्जातकस्यसुतसंबंधिनंवेधंनवेधं।
नाहुः सुतस्यापिपितृसंबंधिनंवेधंनाहुः तथाखयुगेजन्मराशेर्दशमेसूर्यः शुभः चेच्चतुर्थस्थानेशनिवर्जिताअन्येग्रहाः॥ ॥

स्पुलत्वाद्विद्ध इत्येवं श्लोकत्रयंसम्यग्व्याख्येयं तथाग्निनंद तृतीयनवमयोः शिवास्तयोरेकादशपंचमयोः क्रमाच्छुभोविद्धश्चेत्तेयः भौमेति भौम
शनी तमोगुश्च त्रयोपिजन्मराशितः एकांकयोः लाभशरे गुणांत्ये क्रमाच्छुभाविद्धाश्चेत्यर्थः परंतु शनेः सूर्यवेधोनास्तीत्युक्तंप्राक् चंद्रोंब
राब्धीइत्यग्रे १ अथबुधगुरुशुक्राणांगोचरफलंउपजातिकेंद्रवज्राभ्यामुपजातिकापूर्वार्द्धेनाह चंद्रइति जन्मभात् अंबराब्धी गुणनंद
योः लाभाष्टमे आद्यशरे रसांत्ये नगद्वये चंद्रः क्रमाच्छुभोविद्धश्चेत्तेयः चंद्रस्तुबुधवेधोनास्ति अथज्ञइति द्विशरे अब्धिरामे रसांक
योः नागविधौ खनागे लाभव्यये ज्ञोबुधः क्रमात् शुभोविद्धश्चेत्तेयः अत्रचंद्रवेधोनास्ति अथदेवगुरुरिति जन्मभात् शराब्धौ ह्यंत्ये
नवाशे अद्रिगुणे शिवाहौ देवगुरुर्बृहस्पतिः क्रमाच्छुभोविद्धश्चेत्तेयः अथशुक्रइति जन्मराशेः सकाशात् कुनागे द्विनगे अग्निरूपे वेदां

रसांकयोर्लाभशरेगुणांत्येचंद्रोंबराब्धौगुणनंदयोश्च १ लाभाष्टमेचाद्यशरेरसांत्येनगद्वयेज्ञोद्विशरेब्धिरामे रसांक
योर्नागविधौखनागेलाभव्ययेदेवगुरुः शराब्धौ २ ह्यंत्येनवाशेद्रिगुणेशिवाहौशुक्रः कुनागेद्विनगेग्निरूपे वेदां
बरेपंचनिधौगजेषौनंदेशयोर्भानुरसेशिवाग्नौ ३ क्रमाच्छुभोविद्धइतिग्रहः स्यात्पितुःसुतस्यात्रनवेधमाहुः ॥

बरे पंचनिधौ गजेषौ नंदेशयोः भानुरसे शिवाग्नौ शुक्रः क्रमाच्छुभोविद्धश्चेत्तेयः अत्रेदंतात्पर्यं सूर्योरसांत्येइत्यादिप्राक्पठितस्थानेषुवि
द्यमानः [illegible]ग्रहः शुभदः तदनंतरपठितस्थानेषुस्थितोऽशुभफलदाता अर्थादेवानुक्तस्थानेषुनशुभोनाप्यशुभइति २ ३ अथवाम
वेधं[illegible]पक्षेचंद्रबलं[illegible]पजात्युत्तरार्धेनाह दुष्टोपीति दुष्टोपिस्वजन्मराशेः सकाशादनंतरपठितविरुद्धस्थानस्थितोपिविपरीतवेधाद्वामवे
धाच्छुभः यथासूर्योद्वादशेऽनिष्टइत्युक्तंप्राक् सयदिशनिवर्जितैर्ग्रहैः षष्ठस्थानस्थितैर्विद्धः सन्शुभफलदाता एवमुत्तरस्थानस्थितोयः
कश्चित्ग्रहः प्राक्पठितस्थानस्थितैर्ग्रहैर्विद्धः शुभइति सर्वत्रव्याख्येयं अयमेववामवेधइत्युच्यते ॥ ॥

कश्यपः अपिविद्धोग्रहः किंचिन्नददातिशुभंफलं वामवेधविधानेनत्वशुभोपिशुभप्रदः द्विकोणेइति सितेशुक्लपक्षेऽब्जश्चंद्रोद्वितीयनवपंच
मेषुस्थितः शुभदः अत्रापिक्रमेण षष्ठाष्टमचतुर्थस्थानस्थितैर्वेधवर्जितैर्ग्रहैर्यदिनविद्धस्तदाशुभइतिध्येयं नारदः शुक्लपक्षेशुभश्चंद्रोद्वि
तीयनवपंचमे रिपुमृत्युसुखस्थैश्चनविद्धोगगनेचरैरिति ४ अथद्विविधमतमुपजात्याह स्वजन्मराशेरिति इहद्विविधवेधविधौऽन्येनारद
द्यः स्वजन्मराशेः सकाशात्द्विविधमपिवेधमाहुः तथाचोभयत्रापिनारदेनजन्मतइत्युक्तं अन्येकश्यपादयः सपुनर्द्विविधोग्रहाधिष्ठि
तराशितः ग्रहोयस्मिन्राशौतिष्ठतितत एवक्रमाद्वेधोवामवेधश्चभवति यथा सूर्योजन्मराशेः षष्ठस्थितः शुभः सूर्याक्रांतराशेः द्वादशा
स्थानस्थितैः शनिवर्जितैर्ग्रहैर्नविद्धः तथासूर्योद्वादशस्थानस्थितोनिष्टः सूर्यःस्वाक्रांतराशेःषष्ठस्थानस्थितैःशनिवर्जितैर्ग्रहैर्विद्धश्चे

दुष्टोपिखेटोविपरीतवेधाच्छुभोद्विकोणेशुभदः सितेऽब्जः ४ स्वजन्मराशेरिहवेधमाहुरन्येग्रहाधिष्ठितराशि
तः सः हिमाद्रिविंध्यांतरएववेधोनसर्वदेशेष्वितिकाश्यपोक्तिः ५

॥ त्तदाशुभंफलदइत्यर्थः अथद्विविधवेधस्यैवविष
यकल्पनोच्यते हेमाद्रीति हिमाचलविंध्याचलयोर्मध्यवर्तिन्येचदेशेसवेधोविज्ञेयः नसर्वदेशेष्विति काश्यपोक्तिः काश्यपवचनेचयदाह स
ज्ञातव्यंजन्मराशेस्तुनिखिलंयद्बलाबलं हिमाद्रिविंध्ययोर्मध्येवेधजंतद्बलाबलयात् अपरेतु सूर्योरसांत्यइति कामिकेवेधोजन्मराशेरेवज्ञेयः
विपरीत[illegible]ग्रहाधिष्ठितराशितएवेतिवदंति गुरुः जन्मतः क्रमवेधः स्याद्वामवेधोग्रहालयादिति इदमपिहिमाद्रिविंध्यांतरविषयमेवे
त्यन्ये एतद्वानैर्दुर्घटमित्याह नारदः अज्ञात्वाद्विविधंवेधंयोग्रहस्तोबलंवदेत् समृषवचनाभाषीहास्यंयातिजनेसदेति एवंगोचरदोषे
यात्रादिनकार्ये तत्रशांतिमाह नारदः ग्रहेषुविषमस्थेषुशांतिंयत्नात्समाचरेदिति सौम्येक्षितेनिष्टफलःशुभदः पापवीक्षितः निष्फलोतोग्रहो
स्वेनशत्रुणाचावलोकितः नीचराशिगतः स्वस्यशत्रुक्षेत्रगतोपिवा शुभाशुभफलंनैवदद्यात्संगतोपिवेति एतादृशस्थलेदुष्टत्वाभावारेवशांत्याभाव

अथगोचरप्रस्तावात्ग्रहणीयनक्षत्रफलंग्रहणीयराहुगोचरफलंग्रहणाशुभप्रतीकारंचदुष्टग्रहणदर्शननिषेधेचशार्दूलविक्रीडितेनाह
जन्मर्क्षेइति यस्यजन्मनक्षत्रेग्रहेग्रहणेसतिनिधनंमरणंस्यात् वसिष्ठः यस्यैवजन्मनक्षत्रेग्रस्येतेशशिभास्करौ तस्यव्याधिभयंघोरंज
न्मराशौधनक्षयइति विशेषोभार्गवीये यस्यराज्यस्यनक्षत्रेस्वर्भानुरुपरज्यते राज्यभंगंसुहृन्नाशंमरणंवात्रनिर्दिशेदिति राज्यस्यनक्षत्रे
राज्याभिषेकनक्षत्रे अथराशिफलंजनिभतइति जन्मराशेरारभ्यग्रहणेसतिक्रमेणघातादिकंफलंभवति यथा जन्मराशौग्रहणेसति
घातः शरीरपीडा द्वितीयराशौक्षितिर्द्रव्यनाशः तृतीयराशौश्रीलक्ष्मीप्राप्तिः चतुर्थराशौव्यथाशरीरपीडा पंचमराशौचिंतापुत्रादीनां षष्ठ
राशौसौख्यं सप्तमराशौकलत्रदौस्थ्यंस्त्रीकष्टं अष्टमराशौमृतिर्मरणं नवमराशौमाननाशः दशमराशौसुखं एकादशराशौलाभप्राप्तिः द्वा

जन्मर्क्षेनिधनंग्रहेनिजभतोघातःक्षितिःश्रीर्व्यथाचिंतासौख्यकलत्रदौस्थ्यमृतयःस्युर्माननाशःसुखं लाभो
पायइतिक्रमात्तदशुभध्वस्त्यैजपःस्वर्णगोदानंशांतिरथोग्रहंत्वशुभदंनोवीक्ष्यमाहुःपरे ६ ॥ ॥

दशराशौअपायोनाशः आत्मनइतिकेचित् द्रव्यस्येत्यपरे इदंषण्मासपर्यंतमितिज्ञेयं तदनंतरंग्रहणांतरसंभावनाय उक्तंचदैवज्ञम
नोहरे घातंहानिमथश्रियंजननभाद्व्याप्तिंचचिंताक्रमात्सौख्यंदारवियोजनंचकुरुतेव्याधिंचमानक्षयं सिद्धिंलाभमपायमर्कशशि
नोःषण्मासमध्येग्रहइति अथाशुभस्यचक्रग्रहणप्रतीकारमाह तदशुभेति तस्यग्रहणाशुभस्यध्वस्त्यैनाशायजपस्वर्णगोदानंजपोगा
यत्र्यादिमंत्राणां स्वर्णंसुवर्णं गौर्धेनुः भूमिर्वा उपलक्षणत्वादन्येषांरूप्यादीनां यथाशक्त्यादानंकार्यमितिशेषः तद्दोस्थ्यवपुकटुकवज्जय
विधिस्वर्णादिदानंभवेदित्युक्तेः दानंज्योतिर्निबंधे सुवर्णनिर्मितंनागंसतिलंताम्रभाजने सदक्षिणंसवस्त्रंचश्रोत्रियायनिवेदयेत् मंत्रश्च
तमोमयमहाभीमसोमसूर्यविमर्दन हेमनागप्रदानेनममशांतिप्रदोभवेति स्कांदे गोदानंभूमिदानंचस्वर्णदानंविशेषतः ग्रहणक्लेशनाशा

यद्देवतायनिवेदयेत् इति व्यासेनोक्तं सर्वं गंगासमं तोयं सर्वे ब्रह्मसमा द्विजाः सर्वं भूमिसमं दानं ग्रहणे चंद्रसूर्ययोरिति अन्यच्च ग्रस्यमाने भवे।
त्स्नानं ग्रस्ते होमो विधीयते मुच्यमाने भवेद्दानं मुक्ते स्नानं विधीयते इति सूर्येंदुग्रहणं यावत्तावत्कुर्याज्जपादिकमिति शिवरहस्योक्तेः जपमादिश
ब्दाद्देवार्चनादिकार्यं अथ स्नानविशेषेण ग्रहणमरिष्टजनकमित्युक्तं तद्दृष्टश्रुतादृष्टमपीति सप्रायेण निर्णयमाह अथोइति तुविशेषे परे आ
चार्याः अशुभदं ग्रहणं तु नो वीक्ष्यं न दृष्टव्यमित्याहुः उक्तं च जन्मसप्ताष्टरिःफांकदशमस्थे निशाकरे दृष्टोरिष्टप्रदो राहुर्जन्मर्क्षे निधने तथा
जन्मर्क्षं जन्मनक्षत्रं निधनं वधतारा सप्तमी अत्र दृष्ट इति पदश्रवणाद्दर्शनं चाक्षुषं विवक्षितमिति तेषामाशयं तन्न चाक्षुषं स्नानएव दर्शे मुख्यत्वे
इति परेषां मतं तदसत् अदृश्यरूपाः कालस्य मूर्तयो भगणाश्रिताः शीघ्रमंदोच्चपाताख्या ग्रहाणां गतिहेतवे इति सूर्यसिद्धांते पातानामदृश्य
नोक्ता पातो राहुश्च पर्यायः दक्षिणोत्तरयोरेवं पातो राहुश्च रंहसा विक्षिपत्येव विक्षेपश्चंद्रादीनामयं क्रमादिति सूर्यसिद्धांतोक्तेः अतः पाता
नामदृश्यत्वात् राहोर्दर्शनमेवानुपपन्नं ननु ग्रहणे सूर्यचंद्रयोश्छादको राहुर्दृश्यत एव अत एव राहुग्रस्ते निशाकर इत्यादि पुराणोक्ति
रपीति चेन्न भानोर्भार्धे मही छाया तत्तुल्येर्के समेपि वा शशांकपाते ग्रहणं कियद्भागाधिकोनके इत्युपक्रम्य छादको भास्करस्येंदुरधःस्थो घ
नवद्भवेत् भूछाया प्राङ्मुखश्चंद्रो विशत्यस्य भवेदसौ अतो भूछाया अस्य चंद्रस्य छादको भवेदित्यर्थः सूर्यसिद्धांते छाद्यछादकभा
वोऽभिहितः स्पष्ट एव पुराणविरोधपरिहारस्तु भास्करेणैव राहुः कुभामंडलगः शशांकमित्यादिनोक्तं वराहेणापि तस्मिन्काले सान्निध्यम
स्य तेनोपचर्यते राहुरित्युक्तात् तस्माद्राहोर्दर्शनं नास्त्येव तन्मते दर्शनं चाक्षुषमेव विवक्षितं एवं च राहोर्दर्शनं राहुदर्शनमिति तत्पुरुषो नुपप
न्नः तस्माद्दर्शनशब्देनोपरागो लक्ष्यते राहुदर्शने राहूपराग तस्मिन्वा राहुदर्शने इति अयमर्थः राहुर्नाम पातस्तत्संबंधेन दर्शनमुपरागइ
ति न च राहोरेव लक्षणयोपरागपरत्वस्य दर्शनमिति पूर्वपक्षाभिमतार्थसिद्धिरिति वाच्यं लक्षणया त्वर्थांतरसंभवे सति वक्तव्याः अत्यं
तादर्शनाद्राहोस्तथा चात्यंतदर्शने प्रजापीडाविनिर्देश्या व्याधिदुर्भिक्षतस्करैरिति विष्णुधर्मोत्तरादिवाक्येष्वपदांतरासंनिधानाद्राहुशब्दे

नोपरागो लक्ष्यते इह च राहोः पातस्य च ग्रहणनिरूपमर्थान्तरमस्तीत्यतो राहुदर्शनग्रहपातयोः समानार्थकनास्तीत्येव सिद्धमिति प्रागुक्तानां सर्वे
वचसा ग्रहणे स्नायादित्येकवाक्यार्थः फलितो भवति केचित्तु दर्शनादर्शनविषयकयोस्तु विध्योस्तुल्यबलत्वात्स्वकृद्दृष्ट्वा स्नायादितिवद।
ति तदसत् जन्मसप्ताष्टरिःफांके इत्यादिना सामान्यतो निषिद्धस्य उपरक्तदर्शनस्य नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन नोपरक्तं न वारि
स्थं न मध्यं नभसो गतमिति मनूक्तोपरक्तदर्शनस्य पुनर्निषेधानुपपत्तेः प्रागुक्तदिशा राहुदर्शनपदस्य राहूपरागलक्षकत्वेन तुल्यबलत्वाभा
वात् तस्माद् उपरक्तयोः सूर्याचंद्रमसोर्यस्य कस्यापि दर्शने निषेधसत्वात् ग्रहणे च स्नानदानाद्युक्तेस्तद्दानं च ज्योतिःशास्त्रैकदेशगणितग्रंथे
भ्यो बुध्वा तस्मिन्काले दानादि विधेयमिति सिद्धांतः अत एव मेघाद्यावृतेषु उपरागे स्नानादि विधेयमेव· रात्रौ सूर्योपरागे दिवा चंद्रोपरागे च स्नानादि
कं तु वचनान्न भवति तदुक्तं निगमे सूर्यग्रहो यदा रात्रौ दिवा चंद्रग्रहो यदि तत्र स्नानं न कुर्वीत दद्याद्दानं न च क्वचिदिति तादृशे ग्रहणे दृष्टेपि
दोषो नास्तीत्यपि सूचितं जाबालिवचनं तु संक्रान्तेः पुण्यकालस्तु षोडशोभयतः कलाः चंद्रसूर्योपरागे तु यावद्दर्शनगोचर इति ग्रस्तास्तमय
नपर्यन्तं दर्शनगोचरत्वात् तावान्कालः पुण्यकालो भवतीति व्याचख्युः तदुक्तं विश्वरूपनिबंधे दिवा चंद्रग्रहो रात्रौ सूर्यपर्वेन पुण्यदं संधिस्थं पुण्य
वद्ज्ञेयं यावद्दर्शनगोचर इति अन्ये तु सूर्यस्यादर्शनं रात्रिर्दिनं तद्दर्शनात्मकं भुजवृत्तात् परिच्छिन्नो कोदर्शनं स्मृतमिति वसिष्ठसिद्धान्तवचनान्मे
घावृतेऽनावृते चोपरागे गणितागतस्थितिघटिकाः पुण्यकाल इत्याहुः यत्रार्काशोभस्या सह संलग्नमिव दृश्यते स प्रदेशो भुजशब्दवाच्यः अ
र्क इत्युपलक्षणं चंद्रादिग्रहनक्षत्राणां विष्णुधर्मोत्तरे अहोरात्रे न भोक्तव्यं चंद्रसूर्यग्रहो यदा मुक्तिं दृष्ट्वा तु भोक्तव्यं स्नानं कृत्वा ततः परमिति ग्र
स्तास्ते गुरुः ग्रस्तावेव वा स्नानं तु रवींद्वोः प्राप्नुतो यदि तयोः परेद्युरुदये स्नात्वाभ्यवहरेन्नरः इत्यनयोर्वाक्ययोर्दर्शनोदयशब्दो भुजवृत्तोपरिस्थि
तोऽर्कस्यको अन्यथा मेघाद्यावरणे न परदिवसेपि दर्शनाभावे उपवासः प्रसज्येत तथा यत्र स्पर्शकाले ग्रहणं दृष्टं स्नानं विहितं तत्रान्तरे मेघावर
णाद्रविचंद्रयोर्दर्शनाभावो दिवसद्वयं त्रयं वा स्यात्तत्राप्युपवासः प्रसंगः स्यात् न वशिष्टास्तथाचरंति तस्माद्दृशिदर्शनार्थं एव तस्माच्छास्त्रीयग्रहण

त्वानेक्षतिमेधानावृत्तेपिग्रहणे ग्रहणमदृष्ट्वेवचक्षुष्मता अंधेनगंतुमशक्तेनचवृद्धादादिनासह्या त्वीयविधेयमितितात्पर्यार्थः अतएवभागव
तेकुरुक्षेत्रे स्नानार्थंमिलितानांपांडवीयलोकानामध्ये धृतराष्ट्रोपिपरिगणितइतिशिष्टाचारेप्येवमेवास्ति एवंचारिष्टजनकत्वेनतस्माज्जन्मसन्ना
केत्रिपद्यंनिर्मूलत्वादुपेक्ष्यं किंच मत्स्यसूक्तोलब्धवसिष्ठमत्स्यपुराणादिवाक्येदर्शपदाभावाच्च अतएवमूलेपरेइतिपदंप्रयुक्तं शांतिसुदर्शो
नाभावेपिविधेया यतोरिष्टयोगानांस्वरूपसत्तामेवारिष्टजनकत्वात् अथग्रहणशांतिः येषांतुविषमस्थानेराहुश्चंद्रमुपक्रमेत् कर्मक्षयप
रिक्लेशान्प्राप्नुवंतिचतेजनाः पितृपक्षविनाशायसूर्यस्थानेभवेद्ग्रहः मातृपक्षविनाशायचंद्रस्थानेभवेद्ग्रहः होरायांग्रहणेयस्यनक्षत्रेवा
निशाकरः प्राणसंदेहमाप्नोतिसवामरणमृच्छति यस्यत्रिजन्मनक्षत्रेग्रहणेशशिभास्करे तज्ज्ञानानांभवेत्पीडायेनराः शांतिवर्जिताः संक्रमद
नस्यपेषांजन्मतृतीयेथवाग्रहण बहुरोगमृत्युजननोदानाहुतयोजयाश्चकर्तव्याः तस्माद्दानंचहोमंचदेवार्चनंजपो तथा उपरागाभिषेकंच
कुर्याच्छांतिर्भविष्यति नक्षत्रदानंयथा रूपंविधायसुजगस्यतुकांचनेनपिष्टेनवाहिमकरेदिवसाधिपेच यस्तेत्रिजन्मदिवसेनमसाप्रदद्या
द्विप्रायवेदविदुषेसुपरीक्षिताय यस्यराशिंसमासाद्यभवेद्ग्रहणसंभवः तत्रस्नानंप्रवक्ष्यामिमंत्रौषधिसमन्वितं चंद्रोपरागंसंप्राप्यकुर्याद्ब्राह्म
णवाचनं संपूज्यचतुरोविप्रान्शुक्लमाल्यानुलेपनैः पूर्वमेवोपरागस्यसमानीयौषधादिकं स्थापयेच्चतुरः कुंभानव्रणान्सागरानिति गजाश्व
रथ्यावल्मीकसंगमात् ह्रदगोकुलात् राजद्वारप्रदेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंचकुंभेषुशुद्धमुक्ताफलानिच रोचनंपद्मकंशंखं।
पंचरत्नसमन्वितं स्फटिकंचंदनंश्वेतंतीर्थवारिचपल्लवान् जसदंतवकुदसर्षपाश्शीरगुग्गुलून् तत्सर्वंनिक्षिपेत्पूर्वंकुंभेष्वावाहयेत्सुरान् स
र्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुममशांत्यर्थंदुरितक्षयकारकाः तिलहोमंव्याहृतिभिः सहस्रंचाष्टसंयुतं एवंकृत्वाप्रयत्नेनस्ना
नकर्मसमारभेत् आमंत्र्यनवभिर्मंत्रैः कुंभान्तकलशपूर्वकं योसौवज्रधरोदेवो आदित्यानांप्रभुर्मतः सहस्रनयनः शक्रोग्रहपीडांव्यपोहतु मु
खंयः सर्वदेवानांसप्तार्चिरमितद्युतिः चंद्रोपरागसंभूतामग्निःपीडांव्यपोहतु यः कर्मसाक्षीलोकानांधर्मोमहिषवाहनः ॥ ॥

यमश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतु निर्ऋतिः कोणपोदेवः प्रलयानलसंनिभः खड्गव्यग्रोतिभीमश्च रक्षः पीडांव्यपोहतु नागपाशधरोदेवः स
दामकरवाहनः सजलाधिपतिश्चंद्रग्रहपीडांव्यपोहतु प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थांग्रहपीडांव्यपोहतुयोसौनि
धिपतिर्देवः खड्गशूलगदाधरः चंद्रोपरागकलुषंधनदोत्रव्यपोहतुयोसाविंदुयुतोदेवोभवानीपतिरीश्वरः चंद्रोपरागजांपीडांसनाशयतुशंकरः
त्रैलोक्येयानिभूतानिचततोमंत्रान्विलिख्यकान्वितान् वह्निपट्टेऽथवाभूर्जेपंचरत्नसमन्वितान् यजमानस्यशिरसिनिदध्युस्तेद्विजोत्तमाः त
तोतिवाहयेद्वेलामुपरागानुमानिनी प्राङ्मुखंपूजयित्वातेनत्वाचाभीष्टदेवते चंद्रग्रहेविनिर्वृत्तेकृतशौचात्ममंगलः कृतस्नानंचतत्सर्वंब्राह्मणा
यनिवेदयेत् अनेनविधिनायस्तुग्रहस्नानंसमाचरेत् नतस्यग्रहपीडास्यान्नचबंधुधनक्षयः सूर्यग्रहेसूर्यनामसदामंत्रेषुकीर्तयेत् यइदंशृ
णुयान्नित्यंश्रावयेद्वापिवानरः सर्वपापविनिर्मुक्तः सर्वत्रसुखवान्भवेदिति इतिमत्स्यपुराणोक्ताग्रहणशांतिः अथौषधीभिर्ग्रहणशांतिः रोचनं

पापांतः पापयुग्द्यूनेपापांश्चंद्रः शुभोप्यसत् शुभांशेवाधिमित्रांशेगुरुदृष्टोऽशुभोपिसन् ७ सिताऽसितादौसद्दृष्टेचंद्रेप
सौ शुभावुभौ ।।

पद्मकंशंखंकुंकुमंरक्तचंदनंशुक्तिस्फटिकतीर्थांबुसितसर्षपगुग्गुलून् मधुकंदेवदारुंचविष्णुक्रांतामपामार्गवरींवेलांचसह
देवींचनिशाद्वितयमेवचदूर्वांकुरोशीरशमीशिलाजित्सर्वार्थसर्वौषधिपंचमृद्भिः स्नानंविदध्याद्ग्रहहरांशदोः पीडाकरंशांतिवहंचयस्येति इ
अथचंद्रबलेविशेषमनुष्टुप्छंदसाह पापांतइति शुभफलदोपिचंद्रः पापांतः पापद्वयमध्यवर्ती पापयुक्पापग्रहयुक्तः पापात् द्यूनेसप्त
मेवर्तमानस्तदाशुभोपिअसत् अशुभएव यदात्वशुभोपिचंद्रः शुभांशेशुभग्रहनवांशे अथवाधिमित्रनवांशे तथागुरुणादृष्टः सन् शुभफ
लदोभवेत् ७ अन्यदप्यनुष्टुभमाह सितेति शुक्लपक्षादौप्रतिपदि समीचीनचंद्रेसतिसंपूर्णः शुक्लः शुभः असितादौकृष्णपक्षप्रतिपदिदु
ष्टेचंद्रेसतिसंपूर्णः फलः शुभः व्यत्यासेचपूर्वोक्तादर्थाद्विपरीतेद्वावपिपक्षावनिष्टौ ।।

यदा शुक्लप्रतिपदि चंद्रे दुष्टश्चेत्तदा सकलपक्षोऽनिष्टः कृष्णप्रतिपदि चंद्रः शुभश्चेत्तदा संपूर्णः कृष्णपक्षोऽनिष्टः इदमेतावत् अत्र बलं चंद्रव
लं संकटे विवाहयात्रादौ अवश्यकर्तव्ये तात्कालिकचंद्रबलाभावविषयाह्य नान्यथेत्यर्थः ८ अथ ग्रहदोषपरिहारपूर्वकं तुष्टिसंपादनार्थं नव
रत्नसमुदायधारणं शालिन्याह वज्रमिति अत्र सुवर्णमुद्रिकायां नवधाभक्तायां प्रागादिक्रमेण नवरत्नानि निधेयानि तत्र प्रागिति पंचम्यंतम
व्ययं पंचमी चेयं ल्यब्लोपे तेन प्रागादिदिक्ष्वित्ययमर्थो जातः तत्र शुक्रप्रीतये पूर्वस्यां दिशि वज्रं श्वेतहीरकं निधेयं एवं चंद्रप्रीतये मुक्ता शो
भनमुक्ताफलमाग्नेय्यां भौमप्रीत्यर्थं दक्षिणस्यां प्रवालं अगौ राहोर्नैर्ऋत्यां गोमेदं आर्कौ शनेः पश्चिमायां शोभनं नीलं केतोर्वायव्यां वैडूर्यं
गुरोरुत्तरस्यां पुष्पकं पुष्परागं बुधे ईशान्यां पाचिः मध्ये मध्यमकोष्ठे अर्कप्रीत्यै माणिक्यं निधेयं ९ अथ सति सामर्थ्ये नवरत्नसमुदायधारणे

व्यत्यासे त्वशुभो प्राक्तौ संकटेऽब्जबलं त्विदं ८ वज्रं शुक्रेऽब्जे सुमुक्ता प्रवालं भौमेऽगौ गोमेदमार्कौ सुनीलं केतौ वैडूर्यं गुरौ पु
ष्पकं ज्ञे पाचिः प्राङ्माणिक्यमर्के तु मध्ये ९ माणिक्यमुक्ताफलविद्रुमाणि गारुत्मकं पुष्पकवज्रनीलं गोमेदवैडूर्य
कमर्कतः स्यू रत्नान्यथोज्ञस्य मुदे सुवर्णं १० धार्यं लाजावर्तकं राहुकेत्वो रौप्यं शुक्रेंद्वोश्च मुक्ता गुरोस्तु ॥ ॥

मुक्तं इदानीमसति सामर्थ्ये यद्ग्रहकृतदोषं तद्ग्रहरत्नधारणमिंद्रवज्रयाह माणिक्येति सूर्यप्रीत्यर्थं माणिक्यं धार्यं एवं चंद्रस्य मुक्ताफलं भौ
मस्य विद्रुमं प्रवालं बुधस्य गारुत्मकं गरुडः पाचिः गुरोः पुष्पकं पुष्परागः शुक्रस्य वज्रं हीरकः शनेर्नीलं लहसुणिया राहोर्गोमेदं केतोर्वैडूर्यमि
त्येवमर्कतोः कोटीनां ग्रहाणां रत्नानि धार्याणि स्युः तत्र यद्ग्रहकृतदोषं तस्य ग्रहस्य तुष्ट्यै तद्रत्नमेव धार्यमित्यर्थः अथोज्ञस्य मुदे सुवर्णमित्य
ग्रिमश्लोकेन संबंधः १० अथ महामूल्यरत्नधारणस्यासामर्थ्ये अल्पमूल्यानि रत्नानि ताराबलं च शालिन्याह धार्यमिति अथोज्ञस्य बुध
स्य मुदे संतोषार्थं सुवर्णं यथाशक्ति धार्यं राहुकेत्वोस्तु सेलाजावर्तकं मणिविशेषो धार्यः शुक्रेंद्वोस्तु रूप्यं ॥ ॥

गुरोस्तुष्ट्यै मुक्ताफलं शनेस्तुष्ट्यै लोहं आरभान्वोस्तुष्ट्यै प्रवालं धार्यं तारेति यद्दिने ताराबलं चिकीर्षितं तद्दिनेया तारा सा जन्मनक्षत्रात् त्रिरावृत्तितः उ
नःपुनरावृत्तित्रयेण गणनीया स्यात् त्रिरितिसुजंतमव्ययं जन्मनक्षत्रात् दिननक्षत्रगणितेन नवभिर्भक्ते तिलब्धा आवृत्तयो भवंति अवशिष्टतारायाः॥
शुभमशुभं च व्याख्यामिति फलितोर्थः ११ अथ यथाक्रमेण सकलास्तारासंज्ञा अनुष्टुभाह जन्माख्येति स्पष्टोऽर्थः १२ अथावश्यकत्वे दुष्टतारा
णां प्रकारद्वयेन परिहारं शार्दूलविक्रीडितेनाह मृत्यौ स्वर्णतिलानिति मृत्यौ वधतारायां स्वर्णतिलान् यथाशक्ति ब्राह्मणाय दद्यात् विपदि विप
त्तारायां गुडमिक्षुविकारं दद्यात् त्रिजन्मसु तिसृषु जन्मतारासु शाकं वृंताकादि दद्यात् अथो प्रत्यरितारकासु पंचमतारायां लवणं दद्यात् नारदः

लोहं मंदस्यारभान्वोः प्रवालं ताराजन्मर्क्षात् त्रिरावृत्तितः स्यात् ११ जन्माख्यसंपद्विपद्विपदः क्षेमप्रत्यरिसाधकाः वधमै
त्रातिमैत्राः स्युस्तारा नामसदृक्फलाः १२ मृत्यौ स्वर्णतिलान्विपद्यपि गुडं शाकं त्रिजन्मस्वथो दद्यात्प्रत्यरितारकासु ल
वणं सर्वो विपत्प्रत्यरिः मृत्युश्चादिमपर्यये न शुभदो थैषां द्वितीये शाकानादिमांत्यं तृतीयका अथ शुभाः सर्वेतृतीये
स्मृताः १३ षष्टि ६० घ्नं गतभं भुक्तघटीयुतं युगा ४ हृतं॥ ॥ जन्मत्रिपंचसप्ताख्यातारा अनिष्टफलाः स्मृताः शाकं गुडं च लवणं सति

लान्कांचनं क्रमात् अनिष्टपरिहाराय दद्याद्दानं द्विजातये इति अथ द्वितीयः परिहारः तत्रादिमपर्यये प्रथमावृत्तौ विपत्प्रत्यरिमृत्युश्च तृती
यपंचमीसप्तम्यस्ताराः सर्वा अपि सामान्यतः षष्टिघटिकात्मिका न शुभदाः स्युः अथ द्वितीयपर्यये द्वितीयावृत्तौ विपत्प्रत्यरिमृत्यूनां आदि
मांत्यतृतीयकांशा न शुभदाः विपत्तारायामाद्यांशः प्रथमचरणो निषिद्धः प्रत्यरितारायां प्रांत्यांशश्चतुर्थचरणस्त्याज्यः मृत्युतारायां तृ
तीयोंशः तृतीयचरणस्त्याज्य इति अथ तृतीयावृत्तौ विपत्प्रत्यरिमृत्युश्चेते सर्वे षष्टिघटिकात्मिका अपि शुभाः उक्तं च दीपिकायां पर्यायेप्र
थमे वर्ज्यो विपत्प्रत्यरिनैधना इति १३ अथ चंद्रावस्थागणनोपायमाह षष्टिघ्नमिति अश्विनीमारभ्य गतभानि षष्ट्या॥

गुण्ये निवर्त्तमानन्नक्षत्रभुक्तघटीयुतानिनानिपुनर्युगेश्चतुर्भिराहतानि शराब्धिहत् ४५ पंचचत्वारिंशताभाज्यातियल्लब्धमागतंगतावस्थास्ताः शे
षंवर्त्तमानावस्थायाः तत्रलब्ध्यांकस्यापिद्वादशाधिकेद्वादशभिर्भागशेषंप्रवासाद्यवस्थाचंद्रस्यगताः स्युः ताश्चवस्थामेषराशेः पुंसः प्रवासादि
संज्ञाः वृषराशेर्नष्टादिसंज्ञाः एवंमिथुनादिदशराशिषुमृतादिसंज्ञावस्थादितोद्वादशावस्थाः क्रमेणभवंतीत्यर्थः १४ अथद्वादशावस्थानामा
निस फलान्याह प्रवासनाशाविनिस्पष्टार्थं १५ अथग्रहाणांवैकृतपरिहारार्थंसौषधस्नानंदक्षिणाश्चश्लोकद्वयेनविक्रीडितेनाह लाजाकुष्ठेति
लाजाभ्रष्टशालयः इतिकेचित् वस्तुतस्तु ओषधीसाहचर्यात्तुलाजाशब्देनलज्जावतीगृह्यते कुष्ठंप्रसिद्धं बलावरियाराप्रियंगुः फल्गिनी घ

शराब्धि ४५ हृल्लब्धतोर्कशेषेऽवस्थाः क्रमाद्विधोः १४ प्रवासनाशौमरणंजयश्चहास्यारतिक्रीडितसुप्तभुक्ताः॥ ज्वराख्यकं
पस्थिरताश्चवस्थामेषात् क्रमान्नामसदृक्फलास्युः १५ लाजाकुष्ठबलाप्रियंगुघनसिद्धार्थैर्निशादारुभिः पुंखालोध्रयुतै
र्जलैर्निगदितंस्नानंग्रहोत्थाघहृत् धेनुःकंबुरुणोवृषश्चकनकंपीतांबरंघोटकः श्वेतोगौरसितामहासिरजइत्येताः रवे
र्दक्षिणाः १६ सूर्यात्सौम्यास्फुजितोस्तनागसप्ताद्रिघस्रान्विधुरग्निनाडीः॥ पूनोमुस्ता सिद्धार्थाः सर्षपाः निशाहरिद्रा दारुः देवदारुः
पुंखाशरपुंखा लोध्रंप्रसिद्धं एतैरौषधैर्युतैर्जलैः स्नानंग्रहोत्थाघहृत् दुष्टग्रहसूचितारिष्टनाशकंस्यात् सप्रियंगुरजनीद्वयमांसीकुष्ठलाजतिल
सर्षपखंडैः वारिभिः सहवचैः सहलोध्रैः स्नानमतिनिखिलग्रहपीडामित्युक्तेः अथरवेः रविमारभ्यदक्षिणाउच्यंते सूर्यायधेनुं चंद्रायकंबुः शंखः
शंखःस्यात्कंबुरस्त्रियामित्यमरः भौमायारुणोवृषः बुधायसुवर्णं गुरवेपीतांबरं तच्चयथाविभवंकार्पासंकौशेयंवा शुक्रायश्वेतोघोटकः शनये
श्यामवर्णागौः राहवेमहासिर्महामूल्यखड्गं केतवेछागोमेषः एताः दक्षिणाः १६ अथग्रहाः गंतव्यराशेः प्राक्कियद्भिर्दिनैः फलंदद्युरित्येतद्

जिगमिषितराशेः पुरस्तात् पूर्वं नक्षत्रसंख्याघटीदिवसमासान्शुभाशुभफलदाः स्युः यथासूर्योगंतव्यराशेः प्राक् पंचदिनानि फलप्रदः भौमोष्टदि
वसान् बुधः सप्तदिवसान् शुक्रोपि सप्तदिवसान् चंद्रोग्निनाडीत्रयं राहुर्गंतव्यराशेः पूर्वंत्रिमासान् शनिः षण्मासान् गुरुर्मासद्वयंपूर्वंफलद
न्यर्थः १७ अथावश्यकृत्येतिथ्यादौशालिन्यादानमाह दुष्टयोग इति राजादुष्टेव्यतीपातादियोगेतथानाड्यांघटिकायांदुर्मुहूर्तादिदुष्टायांसु
वर्णंयथाशक्तिदद्यात् एवंसर्वत्र शेषंस्पष्टं १८ अथवसंततिलकयान्यदाह राश्यादीति पूर्वार्धंस्पष्टं अध्वान्नेति यस्मिन्मासेस्वजन्मन
क्षत्रप्रवेशेसूर्यादिवाराश्चेत्स्युस्तस्मिन्मासेअध्वादीनिफलानिवाच्यानि यत्रमासिरविवारेजन्मनक्षत्रेसंति अध्वामार्गोभवति एवंचंद्रवारेअन्नं

तमोयमेज्यास्त्रिरसाश्विमासान् गंतव्यराशेः फलदाः पुरस्तात् १७ दुष्टेयोगेहेमचंद्रेचशंखंधान्यंतिथ्यर्द्धेतिथौतंडुलांश्च वारे
रत्नंभेचगांहेमनाड्यांदद्यात्सिंधूत्थंचतारासुराजा १८ राश्यादिगौरविकुजौफलदौसितेज्यौमध्येसदाशशिसुतस्त्वरमेऽब्जमंदौ
अध्वान्नवह्निभयसन्मतिवस्त्रसौख्यदुःखानिमासिजनिभेरविवासराद्यैः १९ ॥ ॥इतिगोचरप्रकरणंचतुर्थं ४॥ आद्यंरजः
शुभंमाघमार्गराधेषफाल्गुने॥ ५५ भस्यप्राप्तिरित्यादि १९ इतिश्रीदैवज्ञरामविरचितायांस्वकृतमुहूर्तचिंतामणिटीकायांगोचरप्रकरणं

चतुर्थंसमाप्तं ४ अथसंस्कारप्रकरणंव्याख्यायते तत्रसंस्क्रियतेअनेनश्रौतेनस्मार्तेनवाकर्मणापुरुषइतिसंस्कारः स्त्रीयस्त्रीयजातौसामान्य
विशेषविहितवैदिकस्मार्तकर्मानुष्ठानद्वारादृष्टविशेषाधायकइतियावत् लक्षणयातदर्थोक्तादिनशुद्ध्यादिकंसंस्कारशब्देनोच्यते तत्प्रकरण
मुपक्रमः तेचसंस्कारागर्भाधानादयोऽष्टाचत्वारिंशत् तत्रगर्भाधानंप्रथमसंस्कारः सचरजस्वलास्त्र्यधीनः ततोरजोदर्शनाच्छुभाशुभफलमुक्तं
वैशिष्ट्येन प्रथमरजोदर्शनतः शुभाशुभंभवतिसर्वेलोकानामिति तत्रशुभसूचकरजोदर्शनमनुष्टुभाह आद्यमिति राधोवैशाखः इषआश्विनः

मु०टी० सं०प्र० ४७

एषु मासेषु आद्यं रजः प्रथमोद्भवं रजोदर्शनं स्त्रीधर्मः शुभं भविष्यच्छुभसूचकं तथा शुक्ले शुक्लपक्षे कृष्णपक्षे तु दशमीपर्यंतं मध्यमं ज्ञेयं कृष्णपक्षस्य दशमीमध्यमं फलमादिशेदिति यावदिति शेषः सद्वारे सतां चंद्रबुधगुरुशुक्राणां वारे सत्तनौ समीचीनलग्ने शुभस्वामिकलग्ने दिवा दिवसे आद्यं रजोदर्शनं शुभमित्यर्थः अत्राशुभफलापवादमाह वसिष्ठः अशुभमपि समस्तं वाति वैसंप्रभूतं सुरगुरुसितयुक्ते वीक्षिते वाथ लग्ने तिमिरमिव कठोरज्योतिर्हन्यतिकाले क्षयमथ समुपैति प्राप्नुयादीप्सितानि कठोरज्योतिः सूर्यः १ अथात्र शुभमध्याशुभनक्षत्राण्यनुष्टुभाह श्रुतित्रयेति श्रवणत्रयमृदुक्षिप्रध्रुवस्वातीनक्षत्रेषु सितांबरे श्वेतवस्त्रे चाद्यं रजः शुभमिति पूर्वेण संबंधः मूलेऽदितिभ पुनर्वसुः पितरो मघा मिश्रे कृत्तिकाविशाखे एतेषु नक्षत्रेषु मध्यमं परेषु भरणीज्येष्ठार्द्राश्लेषापूर्वात्रयेषु असत् अनिष्टं अत्र विशाखामूलयोर्मध्यमत्वाभिधानं वसिष्ठवाक्ये दुष्ट

ज्येष्ठश्रावणयोः शुक्ले सद्वारे सत्तनौ दिवा १ श्रुतित्रयमृदुक्षिप्रध्रुवस्वातौ सितांबरे मध्यं च मूलादितिभे पितृमिश्रे परेष्वसत् २ भद्रानिद्रासंक्रमे दर्शे रिक्तासंध्याषष्ठीद्वादशीवैधृतेषु रोगेष्टम्यां चंद्रसूर्योपरागे पाते चाद्यं नो रजोदर्शनं सत् ३ हस्तानिलाश्विमृगमैत्रवसुध्रुवाख्यैः शाक्रान्वितैः शुभतिथौ शुभवासरे च स्नायादथार्तववती मृगपौष्णवायुहस्ताश्विधातृभिरलं लभते च गर्भं ४

फलश्रवणात् ह्रीदैवभेषु पुष्यवती प्रमत्ताक्रन्त्वेवमोघामयवैरिसंघा मूलेप्रकामाधिकहीनसत्वा व्यसुर्मुमुक्षा द्रुतदोषचित्तेति २ अथनिंद्यरजोदर्शनं शालिन्याह भद्रेति भद्रा प्रसिद्धा निद्रा निद्रावस्था यासंध्या प्रातर्मध्याह्नसायंसंध्या उपरागे ग्रहणे पाते व्यतीपाते महापाते च शेषं स्पष्टं आद्यं रजोदर्शनं नो सत् अनिष्टफलमित्यर्थः ३ अथ रजस्वलास्नानमुहूर्तं वसंततिलकयाह हस्तानिलेति एषु एकादशनक्षत्रेषु शुभतिथौ रिक्तामारहिततिथौ शुभवारे चंद्रबुधगुरुशुक्रवारे आर्तववती ऋतुमती स्त्री स्नायात् अथ विशेषमाह मृगेति मृगरेवतीस्वातीहस्ताश्विनीरोहिणीनक्षत्रैः स्नाता ऋतुमती अंशीघ्रं गर्भं लभते लघुं क्षिप्रं मरं द्रुतमित्यमरोक्तेः दाक्षिणात्यास्तु चतुर्थदिवस एव स्नानं कुर्वंति अन्ये विहितदिने तु

४७

अथगर्भाधानंशार्दूलविक्रीडितशालिनीभ्यामाह गंडांतमिति अत्रस्वपत्नीगमेगर्भाधानेएतान्दोषांस्त्यजेदितिसंबंधः एतान्कान्त्रिविधं
तिथिनक्षत्रलग्नानांगंडांतं श्रीपतिः नक्षत्रतिथिलग्नानांगंडांतंत्रिविधंस्मृतं नवपंचचतुर्थानांद्व्येकार्धघटिकामितमिति निधनजन्मर्क्षे
निधनतारांवधतारांजन्मतारांच मूलं अंतकंभरणी दास्रमश्विनी पौष्णंरेवती मघांउपरागंग्रहणं पातंव्यतीपातंमहापातंच वैधृतिं पित्रोः
मातापित्रोःश्राद्धदिनं दिवादिवसे परिघयोगस्याद्यार्धं उत्पातहतानिदिव्यभौमांतरिक्षस्त्रिविधोत्पातहतानिदूषितानिभानि जन्मर्क्षतःजन्मरा
शेर्जन्मलग्नाद्वामृत्युभवनमष्टमलग्नं पापयुतंभं ५ भद्राषष्ठीति पर्वाणिविष्णुपुराणेचतुर्दश्यष्टमीचैवअमावास्याचपूर्णिमा पर्वाण्येता
निराजेंद्ररविसंक्रांतिरेवचेतिस्कांदेतु कृष्णाष्टमीचतुर्दश्यौपूर्णिमादर्शसंक्रमइति संध्याद्वयं भौमसूर्यशनिवारान् आद्यरात्रीः रजोदर्शन

गंडांतंत्रिविधंत्यजेन्निधनजन्मर्क्षेचमूलांतकंदास्रंपौष्णमघोपरागदिवसान्पातंतथावैधृतिं पित्रोःश्राद्धदिनंदिवाच
परिघाद्यर्धंस्वपत्नीगमेभान्युत्पातहतानिमृत्युभवनंजन्मर्क्षतःपापभं ५ भद्राषष्ठीपर्वरिक्ताश्चसंध्याभौमार्कार्कीनाद्यरा
त्रीश्चतस्रः गर्भाधानंत्र्युत्तरेंद्वर्कमैत्रब्राह्मस्वातीविष्णुवस्वंबुपेसत् ६ केंद्रत्रिकोणेषुशुभैश्चपापैस्त्र्यायारिगैः पुंग्रहदृष्ट
लग्ने॥

मारभ्यदिनचतुष्टयंत्यजेत् कालविधाने षष्ठ्यष्टमीपंचदशीचतुर्थीचतुर्दशीमप्युभयत्रहित्वा शेषाः शुभाः स्युस्तिथयोनि
षेकेवाराः शशांकार्यसितेंदुजानामिति गर्भाधानमिति त्र्युत्तराः इंदुर्मृगः अर्कोहस्तः मैत्रमनुराधा रोहिणीस्वातीश्रवणधनिष्ठाशततार
कासुगर्भाधानंसत्शुभं गुरुः हरिहस्तानुराधाश्चस्वातीवरुणवासवं उत्तरात्रितयंसौम्यरोहिण्यश्चशुभाः स्मृताः आधानेमूलसार्पांत्य
मघ्रौम्यंब्रममन्यभमिति ६ अथगर्भाधानेलग्नमिंद्रवज्रयाह केंद्रेति शुभैः केंद्रत्रिकोणेषुसद्भिः पापग्रहैस्त्र्यायारिगैः सद्भिःपुंग्रहैः
रविभौमगुरुभिर्दृष्टेलग्नेसति तथाओजेचंद्रेओजांशगे॥

विषमराशीनांनवांशगेसति अपिशब्दात्लग्नेपिविषमांशगेयुग्मराशौसमराशौगर्भाधानंकार्यं मध्यममान्याह चित्रादितीज्याश्विषुतत्रभोधा
नंमध्यमंस्यात् गुरुः चित्रादित्येतथातिष्येतुरगेचेतिमध्यमा शेषाण्यृक्षाणिदुष्टानिसुर्निषेकाख्यकर्मणीति एतंगर्भाधानंनिधायपुंसा
किंकार्यमित्याह विघ्नुः निद्रासमयमासाद्यताम्बूलंचंदनान्यजेत् पर्यंकात्समदोभालात्पुष्पपुष्पाणिमस्तकात् इतिगर्भाधानं ७ अथसी
मंतोन्नयनंशार्दूलविक्रीडितेनाह जीवार्केति गुरुरविभौमवारेनिर्ऋतिमूलं ब्रध्नभंहस्तः एतैर्नक्षत्रैःरिक्ता ४।९।१४ अमा ३० अर्को १२रसाः
६ अष्टअष्टमी आभिर्वर्जिततिथिभिः उपलक्षितेदिनेमासाधिपेपीवरेपुष्टेसतीत्यर्थः एतादृशसमयेअष्टमषष्ठमासिअष्टममासेषष्ठमा
सेवासीमंतः सीमंतकर्माख्योगर्भसंस्कारः कार्यः तत्रशुभग्रहैः केंद्रत्रिकोणेसद्भिः खलैःपापैः लाभारित्रिषुसद्भिःपुंभांशकेलग्नेपुरुषराशौ

ओजांशकेऽब्जेपिचयुग्मराशौचित्रादितीज्याश्विषुमध्यमंतत् ७ जीवार्कारदिनेमृगेज्यनिर्ऋतिश्रोत्रादितिब्रध्नभेरिक्ता
मार्करसाष्टवर्ज्यतिथिभिर्मासाधिपेपीवरे॥ ११ विषमराशौलग्ने नवांशेचविषमराशौसति तदासीमंतः शुभः अत्रविशेषमाहक

श्यपः चंद्रोपिशुभदोज्ञेयःत्यक्त्वाषष्ठाष्टमव्ययान् सीमंतलग्नादेकोपिक्रूरः पंचाष्टरिःफगः हंतिसीमंतिनींसापित्वद्गर्भंवानसंशयः न
नैधनेतयोर्लग्नेनैधनेशुद्धिसंयुते तयोःस्त्रीपुंसयोः अस्यापवादः लग्नादष्टमराशीशः केंद्रगःशुभवीक्षितः यद्यप्यष्टमभस्योक्तंदोषमा
शुव्यपोहति गर्गः सीमंतोन्नयनंकार्यंशुभांशेशुभलग्नगे कुलीरयुग्मकन्याश्चवर्ज्याःशेषाश्चशोभनाइति॥ अत्रग्रहबलेसतिकुलीरमिथु
नकन्या अपिग्राह्याइतिज्ञेयं अतएवमूलेलग्नविचारोनकृतः कारिकायां पुनस्तत्राणिचैतानितिष्याहस्तःपुनर्वसुः अभिजित्साष्टयाचै
वअनूराधाश्वियुक्तया ऋक्षत्रयमध्यमेपादद्वयेसीमंतइष्यतेइत्युक्तं अथमतांतरं वाध्रुवान्यसदृह ध्रुवाणिरोहिण्युत्तराअंत्यंरेवती
एषुतथासतांशुभग्रहाणांचंद्रज्ञगुरुशुक्राणांवारेवाकार्यं गुरुःरोहिण्यैंद्रवमादित्यपुष्यहस्तोत्तरात्रयं॥ ॥

पोष्णेवैष्णवभं चैव सीमंते सौम्यवासराइति सीमंतादिषु शोभनाइत्यर्थः जन्मभं सीमंते निषिद्धमाह वसिष्ठः बालान्नभुक्तौव्रतबंधने च राजाभि
षेके खलु जन्मधिष्ण्यं शुभं त्वनिष्टं सततं विवाहसीमंतयात्रादिषु मंगलेषु गुरुः मासप्रयुक्तकार्येषु मूढत्वं गुरुशुक्रयोः नदोषकृत् मलेमा
सोगुर्वादित्यादिकं तथा यद्यपि पुंसवनस्य प्रथमकर्तव्यत्वात् तत्पूर्वं निरूपणमावश्यकं तथापिक्वचित्सीमंतेन सहैव विधानात् बहुश्रुतये
वाचारदर्शनात् सीमंतमुहूर्त एव प्रथममुक्तः नृसिंहः सीमंतोन्नयनं स्योक्ततिथिवारभराशिषु पुंसश्च कार्यं हि द्वाभ्यां सहवैकदिनेथवा इति ८
अयमासेश्वराः स्त्रीणां चंद्रबलं च वसंततिलकेनाह मासेश्वराइति अष्टममासे आधानलग्नाधिपः स्त्रीणामिति विवाहे गर्भसंस्कारे गर्भाधा
नपुंसवनसीमंतादिरूपे स्त्रीणामपि चंद्रबलं ग्राह्यं इतरकर्मसु वस्त्रालंकारादिधारणादिषु भर्तुरेव चंद्रबलं ग्राह्यं यदा भर्तामृतस्तदा पुनः स्त्री

सीमंतोष्टमषष्ठमासि शुभदैः कैंद्रत्रिकोणे खलैर्लाभारित्रिषु वा ध्रुवांत्यसदहे लग्ने च पुंभांशके ८ मासेश्वराः सितकुजे
ज्यरवींदुसौरचंद्रात्मजास्ततनुपचंद्रदिवाकराः स्युः स्त्रीणां विधोर्बलमुशंति विवाहगर्भसंस्कारयोरितरकर्मसु भर्तुरेव ९
पूर्वोदितैः पुंसवनं विधेयं मासे तृतीये त्वथ विष्णुपूजा मासेष्टमे विष्णुविधातृजीवैर्लग्ने शुभे मृत्युगृहे च शुद्धे १० ॥ ॥

णामेव राजमार्तंडः विवाहकार्यं कुसुमप्रतिष्ठा गर्भप्रतिष्ठा वनिता विशुद्धौ अन्यानि कार्याणि धवस्य शुद्धौ पत्न्यो विहीने प्रमदात्मशुध्या
९ अथ यथे पापृथगेव पुंसवनमित्याचारः तदर्थं पुंसवनमुहूर्तं विष्णुपूजामुहूर्तं चैंद्रवज्रयाह पूर्वोदितैरिति पूर्वोदितैः सीमंतकर्मण्यु
दितैः क्षिप्यादिनिरूपलक्षिततृतीये मासि पुंसवनाख्यं कर्म विधेयं पुमांसूयतेऽनेनेति पुंसवनं कर्मणः पुंस्त्वहेतुना अथेति सीमंतानं
तरं अष्टमे मासि विष्णुविधातृजीवैः श्रवणरोहिणीपुष्ये उपलक्षिते दिवसे तथा लग्ने शुभे शुभस्वामिके शुभयुतदृष्टे वा मृत्युगृहे अष्टम
स्थाने शुद्धे सर्वग्रहरहिते च सति विष्णुपूजा कार्या १०॥

अथ जातकर्मनामकरणयोर्मुहूर्त्तमुपजात्याह तज्जातकर्मादीति जातकर्म यद्यपि जन्मानंतरमेव विहितं तथापि संक्रांतिव्यतीपातादिदुष्टविव
सतया पित्राद्यसन्निधाने च तन्न कृतं तदा मुहूर्त्तविचारेण न कार्यं गर्गः व्यतीपाते च संक्रांतौ ग्रहणे वैधृतावपि अमाद्दृष्टिनाशुभं कर्म प्राप्ते कालेपि ना
चरेदिति अत एव कालविकल्पोक्तो नारदेन तस्मिन् जन्ममुहूर्त्ते तु सूतकांते सदा शिशोः जातकर्म च कर्त्तव्यं पितृपूजनपूर्वकमिति अत एव
रिक्ताभिश्च
कामिति जातकर्मादीनि तस्य जातस्य शिशोर्जातकर्म आदि शब्दान्नामकर्मोच्यते पर्वाणि चतुर्दश्यष्टमी कृष्णेत्यादिपूर्वोक्तानि
ऊनतिथ्यो विवर्जिततिथौ शुभेह्नि शुभवारे तथा एकादशे द्वादशे वापि घस्रे दिवसे तथा मृदुध्रुवक्षिप्रचरनक्षत्रेषु शस्तः स्यादिति क्रांतं जात
कर्मादि विधेयं कर्त्तव्यं तच्च श्रवणानंतरं सचैलं स्नानं कृत्वा कार्यं वसिष्ठः श्रुत्वा जातं पिता पुत्रं सचैलं स्नानमाचरेत् उत्तराभिमुखो भूत्वा नद्यां वा

तज्जातकर्मादि शिशोर्विधेयं पर्वाख्यरिक्तोनतिथौ शुभेह्नि एकादशे द्वादशकेपि घस्रे मृदुध्रुवक्षिप्रचरोडुषु स्यात् ११॥

देवखातके तच्च शीतोदकेन कुर्यान्नैमित्तिकं स्नानं शीताभिः काम्यमेव चेति रात्रावपि कार्यं वसिष्ठः पुत्रजन्मनि यज्ञे च तथा संक्रमणे रवेः राहो
श्च दर्शने स्नानं प्रशस्तं नान्यथा निशीति सूतके तु समुत्पन्ने पुत्रजन्म यदा भवेत् कर्तुस्तात्कालिकी शुद्धिः पूर्वाशौचेन शुध्यति रात्रौ जलाशयेग
मनाशक्तौ सांख्यायनः दिवाहृतेन तोयेन कृत्वा स्वर्णयुतं तु तत् रात्रिस्नाने तु संप्राप्ते स्नायादनलसंनिधौ विति जातकर्मप्रयोजनमाह गुरुः जात
कर्मक्रियां कुर्यात्पुत्रायुः श्रीविवृद्धये ग्रहदोषविनाशाय सूतकाशुभविच्छिदे कुमारग्रहनाशाय पुंसां सत्वविवृद्धये इति वसिष्ठः एकादशेह्नि वि
प्राणां क्षत्रियाणां त्रयोदशे वैश्यानां षोडशे नाममासांते शूद्रजन्मन इति वसिष्ठे नमासनामान्युक्तानि चैत्रादिमासनामानि वैकुंठोथ जनार्दनः
उपेंद्रो यज्ञपुरुषो वासुदेवस्त्रिविक्रमः योगीशः पुंडरीकाक्षः कृष्णोऽनंतोऽच्युतस्तथा चक्रधारीति चैतानि क्रमादाहुर्मनीषिण इति ११॥

अथसूतिकास्नानमुहूर्तंवसंततिलकेनाह पौष्णेति हयोश्विनी एषुरेवत्यादिनक्षत्रेषुसमित्रभरवीज्यकुजेषुअनूराधानसत्रसूर्यगुरुभौमवारस्रा
हितेषुसूत्याः प्रसूतायाः स्त्रियाः स्नानंशस्तं आर्द्रात्रयेश्रवणमघाभरणीमिश्रेकृत्तिकाविशाखेमूलचित्रासुनशस्तं बुधवारेशनिवारेवसुरष्टमी
षट्षष्ठीरविर्द्वादशीरिक्तातिथिषुचनशस्तं स्तन्यपानमुहूर्तंदैवज्ञवल्लभे रिक्तांभौमंपरित्यज्यविशिष्टेपातंसर्वेध्रुतिंमृदुध्रुवक्षिप्रभेशुक्लनपानं
हितंशिशोरिति १२ अथप्रसंगात्प्रथमादिमासोत्पन्नदंतफलंशार्दूलविक्रीडितेनाहमासेचेदिति बालश्चेज्जन्मानंतरंप्रथमेमासेचेत्सदशनो
दंतयुक्तोभवेत् तदास्वयंबालोनश्येत् ततोद्व्यादिकेद्वितीयादिमासेअनुजातभागिनीमात्रग्रजानक्रमाद्धंति द्वितीयेमासियदिदंतोत्पत्तिस्तदाऽ
नुजातकनिष्ठभ्रातरंहंति एवंतृतीयेभगिनीं चतुर्थेमातरं पंचमेज्येष्ठभ्रातरंषष्ठादिमासेषुअतुलंभोगंलभते सप्तमेतातात्पितुःसुखं अष्ट

पौष्णध्रुवेंदुकरवातहयेषुसूतीस्नानंसमित्रभरवीज्यकुजेषुशस्तं नार्द्रात्रयश्रुतिमघांतकमिश्रमूलत्वाष्ट्रेज्ञसौरिवसुष
ट्विरिक्ततिथ्यां १२ मासेचेत्प्रथमेभवेत्सदशनोबालोविनश्येत्स्वयंहन्यात्सक्रमतोनुजातभगिनीमात्रग्रजान्द्व्यादिके

मेपुष्टतां नवमेलक्ष्मीं दशमेसौख्यं अग्रेपिसुखाधिक्यमेव अर्थोऽइति अथोजनोजन्मकालएवसदशनः दंतयुक्तः स्वपित्रादिहास्वमात्मानं
पितरंचआदिशब्दान्मातरमपिनाशयतीतिस्वपित्रादिहा वोर्ध्वमिति वाअथवाऊर्ध्वेऊर्ध्वपंक्तौजन्मानंतरंविहितेनिषिद्धेपिकालेसदशनश्चे
त्स्यात्तदापिस्वपित्रादिहाआत्मानमपिचनाशकइति उक्तंचविष्णुधर्मोत्तरे उपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः दंतैर्वासहयस्यस्यात् जन्म
भार्गवसत्तम मातरंपितरंचापिखादेदात्मानमेवचेति तत्रैवशांतिरपि गजपृष्ठगतंबालंनौस्थंवास्नापयेद्द्विजः तदभावेतुधर्मज्ञकांचनेतुवरा
सने सर्वौषधैःसर्वगंधैः बीजैःपुष्पैः फलैस्तथापंचगव्येनरत्नैश्चमृत्ति॥

कर्मभिश्चभार्गव स्थालीपाकेन धातारं पूजयेत्तदनंतरं सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनं अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा कांचनरजं भागाश्च भुवं वासनमेव चेति १३ अथ दोलाचक्रमनुष्टुभाह दोलेति तत्र बालस्य दोलायां रोहे दोलासंस्थापने अर्कभात् सूर्याक्रांतनक्षत्रात् पंचनक्षत्रैर्नैरुज्यं तदग्रिमपंचनक्षत्रैर्मरणं तदग्रिमपंचनक्षत्रैर्देहकार्श्यं कृशत्वं स्यात् तदग्रिमैरिषुभिः पंचनक्षत्रैर्व्याधिः रोगः ततः सप्तनक्षत्रैः सौख्यं स्यात् शिशोरेवं फलं सत्कार्यत्वात् उक्तं च सूर्यभाच्चंद्रभं यावत्पंच पंच चतुर्दिशां मध्ये तु सप्त देयानि दोलिकाचक्रमुत्तमं पूर्वभागे निरोगत्वं दक्षिणे मरणं ध्रुवं पश्चिमे तु कृशो बाल उत्तरे व्याधिसंभवः शेषेषु सप्तधिष्ण्येषु बालकः शयने सुखीति १४ अथ

षष्ठादौ लभते हि भोगमतुलं नानात्मसुखं पुष्टतां लक्ष्मीं सौख्यमथो जनैः सद्दशनोद्बोधे स्वपित्रादिहा १३ दोलारोहेऽर्कभात्पंचशरपंचेषुसप्तभैः नैरुज्यं मरणं कार्श्यं व्याधिः सौख्यं क्रमाच्छिशोः १४ दंतार्कभूपधृतिदिग्जिनवासरे स्याद्वारे शुभे मृदुलघुध्रुवभैः शिशूनां दोलाधिरूढिरथ निष्क्रमणं चतुर्थे मासे गमोक्तसमयेऽर्कमितेऽह्नि वा सत् १५ कवीज्यास्तचैत्राधिमासेन पौषे जलं पूजयेत्सूतिका मासपूर्तौ ॥ ॥ दोलारोहणमुहूर्तं वसंततिलकापूर्वार्द्धेनोत्तरार्धेन निष्क्रमणमुहूर्तं चाह दंतार्केति दंता द्वात्रिंशत् अर्का द्वादश भूपाः षोडश धृतयोऽष्टादश दिशो दश एतस्मिन्दिवसे तथा शुभवारे मृदुलघुध्रुवनक्षत्रैरुपलक्षिते बालानां दोलाधिरूढिः दोलायामधिरूढिरारोहः स्यात् अथ चतुर्थे मासे गमोक्तसमये यात्राप्रकरणोक्तसमीचीनकाले शिशूनां निष्क्रमणाख्यसंस्कारपूर्वकं गृहाद्बहिर्गमनं स्यात् वा अथवा अर्कमितेऽह्नि द्वादशदिवसे कुर्यात् गृहान्निष्क्रमणं सूनोश्चतुर्थे मासि कारयेत् यत्नोक्तसमये मासि तृतीये द्वादशेऽह्नि वेति गुरुवचनात् १५ अथ जलपूजामुहूर्तं भुजंगप्रयातेनाह कवीज्यास्तेति शुक्रगुर्वोरस्ते चैत्रे अधिमासे पौषे मास समाप्तौ सूतिका प्रसूता स्त्री जलं न पूजयेत् ॥ ॥ ० ॥ ॥

एतद्व्यतिरिक्तकालेतथाबुधचंद्रगुरुवारेरिक्तावर्जिततिथौहिनिश्चितंश्रवणपुष्यपुनर्वसुमृगहस्तमूलअनुराधाएभिर्नक्षत्रैः सहितेदिनेज
संपूजयेत् अथक्वचिद्दुग्धपानमुहूर्तः एकत्रिंशेवासरेवाद्वितीयेजन्मर्क्षेवाशुद्धलग्नेनुकूले शंखेक्षीरंसन्निदध्याद्विमृताच्चकेधात्रीपूज्य
पूजांविधाय १६ अथान्नप्राशनलग्नंधरयाह रिक्तानंदेति अथोनिष्क्रमणानंतरमेवंविधेकालेबालकानामन्नप्राशनंसत् शुभंस्यात् तत्रैता
न्हित्वा एतेवर्ज्याःरिक्तानंदाष्टदर्शाः ४।९।१४।१।६।११।८।३०।हरिदिवसंद्वादशी उपलक्षणत्वात्तिथिक्षयंहित्वा शनिभौमरविवाराश्चहित्वा
जन्मर्क्षलग्नाष्टमगृहलवगंलग्नंचहित्वाजन्मर्क्षंजन्मलग्नंताभ्यामष्टमलवोऽष्टमगृहं अष्टमलवोष्टमनवांशस्तौगच्छतिप्राप्नोतिएवंविधलग्नं

बुधेंद्वीज्यवारे विरिक्तेतिथौहिश्रुतीज्यादितीढ्कर्कनैर्ऋत्यमैत्रे १६ रिक्तानंदाष्टदर्शंहरिदिवसमथोसौरिभौमार्कवारान्
लग्नंजन्मर्क्षलग्नाष्टमगृहलवगंमीनमेषालिकंच हित्वाषष्ठात्समेमास्यथहिमृगदृशांपंचमादोजमासेनक्षत्रैःस्या
त्स्थिराख्यैः समृदुलघुचरैर्बालकान्नाशनंसत् १७॥ त्यजेत् इत्यर्थः जन्मराशिविलग्नाभ्यांनैधनेशेचवर्जयेदितिकश्यपोक्तेःन

थामीनमेषालिकेचअलिर्वृश्चिकः एतानिलग्नानिहित्वा गोअजकुंभतुलाकन्यासिंहकर्कनृयुग्मकाः शुभदाराशयश्चैतेनमीनमेषवृश्चिका इति
कश्यपोक्तेः षष्ठादिति षष्ठमासमारभ्यसममासेषष्ठाष्टमदशद्वादशमासेषुबालानामन्नप्राशनंकार्यं पुंबालविषयमेतत् अथानंतरंहिनिश्च
येनमृगदृशांकन्यानांपंचमादोजमासेपंचमसप्तमनवमैकादशेषुअन्नप्राशनं तथाचवसिष्ठः युग्मेषुमासेषुचषष्ठमासात्संवत्सरेवानियतंशि
शूनां अयुग्ममासेषुचकन्यकानांनवान्नसंप्राशनमिष्टमेतदिति अत्रानेककालाभिधानेपिस्वगृह्योक्तकालोऽनुष्ठेयस्तत्रशुक्रास्तादिविचा
रोनास्ति इतरेषुगौणकालेषुशुक्रास्तविचारआवश्यकएवेति नक्षत्रैरिति मृदुलघुचरसहितैःस्थिरनक्षत्रैःकुर्यात् १७ ॥ ॥

लग्नबलं वसंततिलकेनाह केंद्रत्रिकोणेति लग्ने खदशामशुद्धसहिते सर्वग्रहरहिते दशमे इत्यर्थः केंद्रत्रिकोणसहजेषु शुभैः सद्भिः त्रिलाभरिपुगैः
पापैः सद्भिः लग्नाष्टषष्ठस्थानरहितं चंद्रं च अन्नप्राशने प्रशस्तं वदंति नारदः दशमे शुद्धिसंयुक्ते शुभलग्ने शुभांशके शुक्लपक्षे च पूर्वाह्ने सौम्ययुक्तनि
रीक्षिते त्रिषष्ठलाभगैः पापैः केंद्रधीधर्मगैः शुभैः व्ययारिनिधनस्थेन चंद्रेण प्राशनं शुभं विशेषमाह गुरुः शुक्राद्याः क्रमाद्याताः सप्तमाष्टमधर्मगाः
भोज्यं भोक्तुर्नवत्वे तु सर्वदा मरणप्रदा इति भोज्यमन्नं गो धूमादि तस्य नवत्वेन भक्षणीयत्वे सति भोक्तुरन्नप्राशनकर्तुर्बालस्य नवत्वे सति वा शुक्रः
सप्तमः भौमोऽष्टमः बुधो नवमः एते ग्रहाः मरणप्रदा इत्यर्थः मैत्रेति अनुराधाश्रवणतारकाख्यानि जन्मनक्षत्राणि केचित् असद्वदंति श्रीपतिनाप्यनु
क्तत्वादिति भावः जन्मनक्षत्रनिषेधो गुरुणोक्तः जन्मर्क्षे कर्मनक्षत्रे आधाने सैव वर्जयेत् कर्णवेधं तथा पानस्वरकर्मान्नभोजनमिति जन्मनक्षत्रा

केंद्रत्रिकोणसहजेषु शुभैः खशुद्धे लग्ने त्रिलाभरिपुगैश्च वदंति पापैः लग्नाष्ट[illegible] रहितं शशिनं प्रशस्तं मैत्रांबुपानिलज
नुर्भमसच्च केचित् १८ क्षीणेंदुपूर्णचंद्रेज्यज्ञभौमार्कार्किभार्गवैः त्रिकोणव्ययकेंद्रस्थितैर्[illegible]कं फलं ग्रहैः १९ ॥ ॥

न्नस्य भोजनमिति तत्रान्नस्य भोजनमिति व्युत्पत्त्या वार्षिकनवान्नभोजनविषयमेतत् न पुनर्बालान्नप्राशनपरं तत्र नारदेनातिप्राशस्त्याभिधानात् तथा
च नारदः पट्टबंधनचौलान्नप्राशने चोपनायने शुभदं जन्मनक्षत्रं अशुभं त्वन्यकर्मणीति १८ अथ ग्रहाणां स्थानवशात्फलान्यनुष्टुप्द्वयेनाह क्षीणें
द्विति त्रिकोणव्ययकेंद्राणि दशमरहितानि ९।५।१२।१।४।७। अष्टौ ८ एषु स्थितैः क्षीणेंद्वादिभिः अष्टभिक्षाशीत्यादि फलं भवति यथा एषु स्थानेषु स्थितः
क्षीणचंद्रश्चेत्तदान्नप्राशनकृत् बालो भिक्षाशी दरिद्रः स्यात् पूर्णचंद्रश्चेत्तदा ज्योतिष्टोमादियज्ञकृत् गुरुश्चेद्दीर्घजीवी बुधश्चेत् ज्ञानी भौमश्चेत् पि
त्तरुक् पित्तकृता रुग्यस्य सोऽपि पित्तरुक् अर्कश्चेत् कुष्ठी आर्किः शनिश्चेत् अन्नाभावसंबंधी क्लेशो न क्लेशः वातप्रधानी व्याधिर्वातव्याधिः एतौ विद्येते
यस्य सोऽन्नक्लेशवान् व्याधिमान् स्यात् राहुकेत्वोरप्येतदेव फलं शुक्रश्चेद्भोगभाक् स्यात् क्षीणचंद्रपूर्णचंद्रयोर्लक्षणमाह वसिष्ठः संपूर्णे दृभयाष्टम्यो मे

